आन्वीक्षिकी तर्कविद्या मीमांसा तु विचारणा ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुवंशचरितं पुराणं पञ्चलक्षणम् ॥ १६६ ॥
षडङ्गी वेदाश्चत्वारो मीमांसाऽन्वीक्षिकी तथा ।
धर्मशास्त्रं पुराणं च विद्या एताश्चतुर्दश ॥ १६७ ॥
सूत्रं सूचनकृद्भाष्यं सूत्रोक्तार्थप्रपञ्चकम् ।
प्रस्तावस्तु प्रकरणं निरुक्तं पदभञ्जनम् ॥ १६८ ॥
अवान्तरप्रकरणविश्रामे शीघ्रपाठतः ।
आह्निकमधिकरणं त्वेकन्यायोपपादनम् ॥ १६९ ॥
उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्तिकम् ।
टीका निरन्तरव्याख्या पञ्जिका पदभञ्जिका १७०

आन्वीक्षिकी, तर्कविद्या, द्वे तर्कविद्यायाः ॥ मीमांसा, विचारणा, द्वयं मीमांसायाः ॥१६५॥ सर्गः, प्रतिसर्गः, वंशः, मन्वन्तराणि, वंशानुवंशचरितम् इति, पञ्चलक्षणम्, पुराणम्, द्वयं पुराणस्य ॥१६६॥ षड् अङ्गानि, चत्वारो वेदाः, मीमांसा, आन्वीक्षिकी, धर्मशास्त्रम्, पुराणम्, चतुर्दशानां विद्यानामेकैकम् ॥ १६७ ॥ सूत्रम् (पु०न०), एकं सूत्रस्य ॥ सूत्रोक्तार्थप्रपञ्चकम्, भाष्यम् एकं भाष्यस्य ॥ प्रस्तावः, प्रकरणम्, द्वे प्रस्तावस्य ॥ निरुक्तम्, पदभञ्जनम्, द्वयं निरुक्तस्य ॥ १६८॥ अवान्तरप्रकरणसंबद्धशीघ्रपाठः आह्निकम्, एकम् आह्निकस्य ॥ एकन्यायोपपादनम् अधिकरणम्, एकमधिकरणस्य ॥ १६९ ॥ उक्तानामनुक्तानां दुरुक्तानां चार्थानां चिन्ताकारि वार्तिकम्, एकं वार्तिकस्य ॥ सुगमानां विषमाणां च पदानां निरन्तरं व्याख्या टीका, एकं टीकायाः ॥ पदानि विषमाण्येव भनक्ति पदभञ्जिका पञ्जिका, एकं पञ्जिकायाः [न्यासः] ॥ १७० ॥

१ 'अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः" ॥ १ ॥ २ "सूत्रस्थं पदमादाय वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" ॥ १ ॥

पृष्ठमांसादन तद् यत् परोक्षे दोपकीर्त्तनम् ।
मिथ्याऽभियोगोऽभ्याख्यानं सगतं हृदयगमम् १८२
परुष निष्ठुरं रूक्षं विक्रुष्टमथ घोपणा ।
उच्चैर्घुष्टं वर्णनेडा स्तवः स्तोत्र स्तुतिर्नुति॰ ॥१८३॥
श्लाघा प्रशंसाऽर्थवादःसा तु मिथ्या विकत्थनम् ।
जनप्रवादः कौलीनं विगान वचनीयता ॥ १८४ ॥
स्यादवर्ण उपक्रोशो वादो निष्पर्यपात् परः ।
गर्हणा धिक्क्रिया निन्दा कुत्सा क्षेपो जुगुप्सनम् ॥
आक्रोशाभीषङ्गाक्षेपाः शापः स क्षारणा रते ।
विरुद्धशासन गालिराशीर्मङ्गलशासनम् ॥ १८६ ॥
श्लोकः कीतिर्यशोऽभिख्या समाज्ञा रुशती पुनः ।

---

॥१८१॥ पृष्ठमासादनम्, एक परोक्षे दोपकथनस्य ॥ मिथ्याभियोग॰, अभ्याख्यानम्, द्वे असत्याक्षेपस्य ॥ सगतम्, हृदयगमम्, द्वे युक्तियुक्तवचनस्य ॥ १८२ ॥ परुपम्, निष्ठुरम्, रूक्षम्, विक्रुष्टम्, चत्वारि निष्ठुरवचनस्य ॥ घोपणा, उच्चैर्घुष्टम्, द्वे उच्चैर्घोपणस्य ॥ वर्णना, ईडा, स्तव, स्तोत्रम्, स्तुति, नुति, ॥ १८३ ॥ श्लाघा, प्रशसा, अर्थवाद, नव स्तुते ॥ विकत्थनम्, एक मिथ्यास्तुते ॥ जनप्रवाद, कौलीनम्, विगानम्, वचनीयता, चत्वारि लोकापवादस्य ॥ १८४ ॥ अवर्ण, उपक्रोश, निर्–परि–अपशब्देभ्य पर वादशब्द यथा—निर्वाद, परिवाद, "परीवाद" अपवाद, गर्हणा, धिक्क्रिया, निन्दा, कुत्सा, क्षेप, जुगुप्सनम्, "जुगुप्सा" एकादश निन्दाया ॥ १८५ ॥ आक्रोश अभीषङ्ग, "अभिषङ्ग" आक्षेप, शाप, चत्वारि शापस्य ॥ स शाप रते मैथुनविषये क्षारणा, "आक्षारणा" एक मैथुनमुद्दिश्य गालिप्रदानस्य । दूपणस्येत्यन्ये ॥ विरुद्धशासनम् गालि (स्त्री), "गाली" एक गाल्या ॥ मङ्गलशासनम् आशी, एकम् आशिप ॥ १८६ ॥ श्लोक, कीर्ति, यश, अभिख्या, समाज्ञा, " समज्ञा, समज्या, समाख्या" पञ्च

**व्यवहारो विवादः स्याच्छपथः शपनं शपः ॥१७६॥**
**उत्तर तु प्रतिवचः प्रश्नः पृच्छाऽनुयोजनम् ।**
**कथकथिकता चाथ देवप्रश्न उपश्रुतिः ॥ १७७ ॥**
**चटु चाटु प्रियप्राय प्रियसत्य तु सूनृतम् ।**
**सत्य सम्यक् समीचीनमृतं तथ्यं यथातथम् १७८**
**यथास्थित च सद्भूतेऽलीके तु वितथानृते ।**
**अथ क्लिष्ट संकुल च परस्परपराहृतम् ॥ १७९ ॥**
**सान्त्व सुमधुरं ग्राम्यमश्लील म्लिष्टमस्फुटम् ।**
**लुप्तवर्णपद ग्रस्तमवाच्य स्यादनक्षरम् ॥ १८० ॥**
**अम्बूकृतं सथूत्कारे निरस्त त्वरयोदितम् ।**
**आम्रेडितं द्विस्त्रिरुक्तमबद्ध तु निरर्थकम् ॥ १८१ ॥**

---

न्यास , वाङ्मुखम्, चत्वारि वचनारम्भस्य ॥ व्यवहार , विवाद , द्वे ऋणादानादिविविधवादस्य ॥ यदुक्तम्—"वि नानार्थेऽव सदेहे हरण हार उच्यते । नानासदेहहरणाद् व्यवहार प्रकीर्तित " ॥ शपथ , शपनम्, शप , त्रय शपथकरणस्य ॥ १७६ ॥ उत्तरम्, प्रतिवच,, द्वे उत्तरस्य ॥ प्रश्न , पृच्छा, अनुयोजनम्, कथकथिकता, चत्वारि प्रश्नस्य ॥ देवप्रश्न , उपश्रुति , द्वे देवप्रश्नस्य ॥ १७७ ॥ चटु, चाटु, प्रियप्रायम्, त्रय प्रियवचनस्य ॥ सूनृतम्, एक प्रियसत्यवचनस्य ॥ सत्यम्,सम्यक्, समीचीनम्, ऋतम्, तथ्यम्, यथातथम्,॥१७८॥ यथास्थितम्, सद्भूतम्, अष्टौ सत्यवचनस्य ॥ अलीकम्, वितथम्, अनृतम्, त्रयमसत्यवचनस्य ॥ क्लिष्टम्, सङ्कुलम्, द्वे मे माता वन्ध्या इतिवत् अन्योन्यविरुद्धवचनस्य ॥ १७९ ॥ सान्त्वम्, सुमधुरम्, द्वे अत्यन्तमधुरवचनस्य ॥ ग्राम्यम्, अश्लीलम्, द्वे ग्राम्यवचनस्य ॥ म्लिष्टम्, अस्फुटम्, द्वे अव्यक्तवचनस्य ॥ ग्रस्तम्, एक लुप्तवर्णपद-वचनस्य ॥ अवाच्यम्, अनक्षरम्, द्वे अवाच्यवचनस्य ॥ १८० ॥ अम्बूकृतम्, एक सथूत्कारवचनस्य ॥ निरस्तम्, एक त्वरितोदितस्य ॥ आम्रेडितम्, एक द्विस्त्रिरुक्तस्य ॥ अबद्धम्, एक निरर्थकवचनस्य

पृष्ठमांसादन तद् यत् परोक्षे दोषकीर्त्तनम् ।
मिथ्याऽभियोगोऽभ्याख्यानं सगतं हृदयगमम् १८२
परुष निष्ठुरं रूक्षं विक्रुष्टमथ घोषणा ।
उच्चैर्घुष्टं वर्णनेडा स्तवः स्तोत्रं स्तुतिर्नुति ॥१८३॥
श्लाघा प्रशंसाऽर्थवादःसा तु मिथ्या विकत्थनम् ।
जनप्रवादः कौलीन विगान वचनीयता ॥ १८४ ॥
स्यादवर्ण उपक्रोशो वादो निष्पर्यपात् परः ।
गर्हणा धिक्क्रिया निन्दा कुत्सा क्षेपो जुगुप्सनम् ॥
आक्रोशाभीषङ्गाक्षेपाः शापः स क्षारणा रते ।
विरुद्धशसन गालिराशीर्मङ्गलशसनम् ॥ १८६ ॥
श्लोकः कीर्तिर्यशोऽभिख्या समाज्ञा रुशती पुनः ।

---

॥१८१॥ पृष्ठमासादनम्, एक परोक्षे दोपकथनस्य ॥ मिथ्याभियोग, अभ्याख्यानम्, द्वे असत्याक्षेपस्य ॥ सगतम्, हृदयगमम्, द्वे युक्ति युक्तवचनस्य ॥ १८२ ॥ परुपम्, निष्ठुरम्, रूक्षम्, विक्रुष्टम्, चत्वारि निष्ठुरवचनस्य ॥ घोपणा, उच्चैर्घुष्टम्, द्वे उच्चैर्घोषणस्य ॥ वर्णना, ईडा, स्तव, स्तोत्रम्, स्तुति, नुति, ॥ १८३ ॥ श्लाघा, प्रशसा, अर्थवाद, नव स्तुते ॥ विकत्थनम्, एक मिथ्यास्तुते ॥ जनप्रवाद, कौलीनम्, विगानम्, वचनीयता, चत्वारि लोकाप वादस्य ॥ १८४ ॥ अवर्ण, उपक्रोश, निर्–परि–अपशब्देभ्य. पर वादशब्द यथा—निर्वाद, परिवाद, "परीवाद" अपवाद, गर्हणा, धिक्क्रिया, निन्दा, कुत्सा, क्षेप, जुगुप्सनम्, "जुगुप्सा" एकादश निन्दाया ॥ १८५ ॥ आक्रोश अभीषङ्ग, "अभिषङ्ग" आक्षेप, शाप, चत्वारि शापस्य ॥ स शाप रते मैथुनविषये क्षारणा, "आक्षारणा" एक मैथुनमुद्दिश्य गालिप्रदानस्य । दूषणसेलन्ये ॥ विरुद्धशसनम् गालि (स्त्री), "गाली" एक गाल्या ॥ मङ्गलशसनम् आशी, एकम् आशिष ॥ १८६ ॥ श्लोक, कीर्ति, यश, अभिख्या, समाज्ञा." समज्ञा. समज्या. समाख्या" पञ्च

व्यवहारो विवादः स्याच्छपथः शपनं शपः ॥१७६॥
उत्तर तु प्रतिवचः प्रश्नः पृच्छाऽनुयोजनम् ।
कथकथिकता चाथ देवप्रश्न उपश्रुतिः ॥ १७७ ॥
चटु चाटु प्रियप्राय प्रियसत्यं तु सूनृतम् ।
सत्य सम्यक् समीचीनमृत तथ्यं यथातथम् १७८
यथास्थितं च सद्भूतेऽलीके तु वितथानृते ।
अथ क्लिष्ट संकुलं च परस्परपराहतम् ॥ १७९ ॥
सान्त्व सुमधुर ग्राम्यमश्लील म्लिष्टमस्फुटम् ।
लुप्तवर्णपद ग्रस्तमवाच्यं स्यादनक्षरम् ॥ १८० ॥
अम्बूकृत सथूत्कारे निरस्त त्वरयोदितम् ।
आम्रेडित द्विस्त्रिरुक्तमबद्ध तु निरर्थकम् ॥ १८१ ॥

---

न्यास , वाङ्मुखम् , चत्वारि वचनारम्भस्य ॥ व्यवहार , विवाद , द्वे ऋणादानादिविविधवादस्य ॥ यदुक्तम्—“वि नानार्थेऽव सदेहे हरण हार उच्यते । नानासदेहहरणाद् व्यवहार प्रकीर्तित ” ॥ शपथ , शपनम् , शप , त्रय शपथकरणस्य ॥ १७६ ॥ उत्तरम् , प्रतिवच , द्वे उत्तरस्य ॥ प्रश्न , पृच्छा, अनुयोजनम् , कथकथिकता, चत्वारि प्रश्नस्य ॥ देवप्रश्न , उपश्रुति , द्वे देवप्रश्नस्य ॥ १७७ ॥ चटु, चाटु, प्रियप्रायम् , त्रय प्रियवचनस्य ॥ सूनृतम् , एक प्रियसत्यवचनस्य ॥ सत्यम् ,सम्यक् , समीचीनम् , ऋतम् , तथ्यम् , यथातथम् ,॥१७८॥ यथास्थितम् , सद्भूतम् , अष्टौ सत्यवचनस्य ॥ अलीकम् , वितथम् , अनृतम् , त्रयमसत्यवचनस्य ॥ क्लिष्टम् , सकुलम् , द्वे मे माता वन्ध्या इतिवत् अन्योन्यविरुद्धवचनस्य ॥ १७९ ॥ सान्त्वम् , सुमधुरम् , द्वे अत्यन्तमधुरवचनस्य ॥ ग्राम्यम् , अश्लीलम् , द्वे ग्राम्यवचनस्य ॥ म्लिष्टम् , अस्फुटम् , द्वे अव्यक्तवचनस्य ॥ ग्रस्तम् , एक लुप्तवर्णपद-वचनस्य ॥ अवाच्यम् , अनक्षरम् , द्वे अवाच्यवचनस्य ॥ १८० ॥ अम्बूकृतम् , एक सथूत्कारवचनस्य ॥ निरस्तम् , एक त्वरितोदितस्य ॥ आम्रेडितम् , एक द्विस्त्रिरुक्तस्य ॥ अबद्धम् , एक निरर्थकवचनस्य

गीतनृत्यवाद्यत्रयं नाट्यं तौर्यत्रिकं च तत् ।
सगीत प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्मिका १९३
गीतं गानं गेयं गीतिर्गान्धर्वमथ नर्त्तनम् ।
नटन नृत्य नृत्त च लास्य नाट्य च ताण्डवम् १९४
मण्डलेन तु यन्नृत्तं स्त्रीणां हल्लीसक हि तत् ।
पानगोष्ठ्यामुच्चताल रणे वीरजयन्तिका ॥ १९५ ॥
स्थानं नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः ।
अङ्गहारोऽङ्गविक्षेपो व्यञ्जकोऽभिनयः समौ १९६
स चतुर्विध आहार्यो रचितो भूषणादिना ।
वचसा वाचिकोऽङ्गेनाङ्गिकः सत्त्वेन सात्त्विकः १९७
स्यान्नाटक प्रकरण भाणः प्रहसन डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥१९८॥

---

आगू (स्त्री०), सगर, द्वादश अङ्गीकारस्य [समाधि] ॥१९२॥ नाट्यम्, तौर्यत्रिकम्, द्वय समुदितगीतनृत्यवाद्यत्रयस्य ॥ सगीतम्, एक प्रेक्षणार्थगीतनृत्यवाद्यत्रयस्य ॥ नाट्यधर्मिका, एक भरतादिशास्त्रोक्तगीतादित्रयस्य ॥ १९३ ॥ गीतम्, गानम्, गेयम्, गीति, गान्धर्वम्, पञ्च गीतस्य ॥ नर्तनम्, नटनम्, नृत्यम्, नृत्तम्, लास्यम्, नाट्यम्, ताण्डवम् (पु०न०), सप्त नर्तनस्य ॥ १९४ ॥ हल्लीसकम् (पु०न०), एक स्त्रीणा मण्डलाकारनृत्यस्य ॥ उच्चतालम्, एक पानार्थसभानृत्तस्य ॥ वीरजयन्तिका, एक युद्धनृत्तस्य ॥ १९५ ॥ रङ्ग, एक नाट्यस्थानस्य ॥ पूर्वरङ्ग, उपक्रम, द्वय गीतादिप्रारम्भस्य ॥ अङ्गहार, अङ्गविक्षेप, द्वय द्वात्रिंशद्भेदस्य नृत्यस्य ॥ व्यञ्जक, अभिनय, द्वय हस्तादिभिर्हृद्गताथप्रकाशनस्य ॥ १९६ ॥ भूषणादिना रचित आहार्य, वचसा रचित वाचिक, अङ्गेन रचित आङ्गिक, सत्त्वेन रचित सात्त्विक, चतुर्णामाहार्यादीनामभिनयानामेकैकम् ॥ १९७ ॥ नाटकम्, प्रकरणम्, भाण (पु०न०), प्रहसनम्, डिम, व्यायोग, समवकार, वीथी, अङ्क, "उत्सृष्टिकाङ्क" ईहामृग, दशाना

अशुभा वाक् शुभा कल्या चर्चरी चर्भटी समे १८७
यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ।
आपृच्छाऽऽलापः सभाषोऽनुलापः स्यान्मुहुर्वचः ॥
अनर्थकं तु प्रलापो विलापः परिदेवनम् ।
उल्लापः काकुवागन्योऽन्योक्तिः सलापसंकथे १८९
विप्रलापो विरुद्धोक्तिरपलापस्तु निह्नवः ।
सुप्रलापः सुवचनं संदेशवाक् तु वाचिकम् ॥१९०॥
आज्ञा शिष्टिर्निराङ्निभ्यो देशो नियोगशासने ॥
अववादोऽप्यथाहूय प्रेषणं प्रतिशासनम् ॥ १९१॥
सवित्सधाऽऽस्थाभ्युपायः समप्रत्याङ्भ्यः परः श्रवः ।
अङ्गीकारोऽभ्युपगमप्रतिज्ञाऽऽगूश्च सगरः ॥ १९२॥

कीर्ते ॥ अशुभा वाक् रुशती (त्रि० ), "उशती" एकम् अशुभवाच , ॥ शुभा वाक् कल्या, "काल्या" एक शुभवचनस्य ॥ चर्चरी, चर्भटी, द्वे हर्षक्रीडाया ॥ १८७ ॥ य सनिन्द उपालम्भ स परिभाषणम्, एक सनिन्दवचनस्य ॥ आपृच्छा, आलाप , सभाप , त्रय सभाषणस्य ॥ मुहुर्वच , अनुलाप , द्वे पौन पुन्यवचनस्य ॥ १८८ ॥ प्रलाप , एकम् अनर्थकवचनस्य ॥ विलाप , परिदेवनम्, द्वे रोदनपूर्वकवचनस्य ॥ उल्लाप , काकुवाक्, द्वे शोकभयादिविकृतध्वनिवचनस्य ॥ सलाप , सकथा, द्वे मिथोभाषणस्य ॥ १८९ ॥ विप्रलाप , विरुद्धोक्ति , द्वय विरुद्धवचनस्य ॥ अपलाप , निह्नव , द्वयमपलापस्य ॥ सुप्रलाप , सुवचनम्, द्वय शोभनवचनस्य ॥ सदेशवाक्, वाचिकम्, द्वय सदेशवचनस्य ॥ १९० ॥ आज्ञा, शिष्टि , निर्–आङ्–निशब्देभ्य परो देशशब्द प्रयोज्यो यथा–निर्देश , आदेश , निदेश , नियोग , शासनम्, अववाद , अष्टौ आज्ञाया ॥ आहूय आकार्य भृत्यादीना प्रेषणम् प्रतिशासनम्, एक भृत्यादिप्रेषणस्य ॥ १९१ ॥ सविद् (स्त्री० ), सधा, आस्था, अभ्युपाय , सम्–प्रति–आङ्–शब्देभ्य श्रवशब्द प्रयोज्य यथा–सश्रव , प्रतिश्रव , आश्रव , अङ्गीकार , अभ्युपगम , प्रतिज्ञा,

गीतनृत्यवाद्यत्रय नाट्यं तौर्यत्रिकं च तत् ।
सगीत प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्मिका १९३
गीत गानं गेयं गीतिर्गान्धर्वमथ नर्त्तनम् ।
नटन नृत्य नृत्त च लास्य नाट्य च ताण्डवम् १९४
मण्डलेन तु यन्नृत्तं स्त्रीणा हल्लीसकं हि तत् ।
पानगोष्ठ्यामुच्चताल रणे वीरजयन्तिका ॥ १९५ ॥
स्थानं नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः ।
अङ्गहारोऽङ्गविक्षेपो व्यञ्जकोऽभिनयः समौ १९६
स चतुर्विध आहार्यो रचितो भूपणादिना ।
वचसा वाचिकोऽङ्गेनाङ्गिकः सत्वेन सात्विक· १९७
स्यान्नाटक प्रकरण भाणः प्रहसन डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥१९८॥

---

आगू (स्त्री०), सगर, द्वादश अङ्गीकारस्य [ समाधि ] ॥१९२॥ नाट्यम्, तौर्यत्रिकम्, द्वय समुदितगीतनृत्यवाद्यत्रयस्य ॥ सगीतम्, एक प्रेक्षणार्थगीतनृत्यवाद्यत्रयस्य ॥ नाट्यधर्मिका, एक भरतादिशास्त्रोक्तगीतादित्रयस्य ॥ १९३ ॥ गीतम्, गानम्, गेयम्, गीति, गान्धर्वम्, पश्च गीतस्य ॥ नर्तनम्, नटनम्, नृत्यम्, नृत्तम्, लास्यम, नाट्यम्, ताण्डवम (पु०न०), सप्त नर्तनस्य ॥ १९४ ॥ हल्लीसकम् (पु०न०), एक स्त्रीणा मण्डलाकारनृत्यस्य ॥ उच्चतालम्, एक पानार्थसभानृत्तस्य ॥ वीरजयन्तिका, एक युद्धनृत्तस्य ॥ १९५ ॥ रङ्ग, एक नाट्यस्थानस्य ॥ पूर्वरङ्ग, उपक्रम, द्वय गीतादिप्रारम्भस्य ॥ अङ्गहार, अङ्गविक्षेप, द्वय द्वात्रिंशद्भेदस्य नृत्यस्य ॥ व्यञ्जक, अभिनय, द्वय हस्तादिभिर्हृद्गतार्थप्रकाशनस्य ॥ १९६ ॥ भूपणादिना रचित आहार्य, वचसा रचित वाचिक, अङ्गेन रचित आङ्गिक, सत्वेन रचित सात्विक, चतुर्णामाहार्यादीनामभिनयानामेकैकम ॥ १९७ ॥ नाटकम्, प्रकरणम्, भाण (पु०न०), प्रहसनम्, डिम, व्यायोग, समवकार, वीथी, अङ्क, "उत्सृष्टिकाङ्क" ईहामृग, दशाना

अशुभा वाक् शुभा कल्या चर्चरी चर्भटी समे १८७
यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ।
आपृच्छाऽऽलापः सभाषोऽनुलापः स्यान्मुहुर्वचः॥
अनर्थकं तु प्रलापो विलापः परिदेवनम् ।
उल्लापः काकुवागन्योऽन्योक्तिः सलापसंकथे १८९
विप्रलापो विरुद्धोक्तिरपलापस्तु निह्नवः ।
सुप्रलापः सुवचन सदेशवाक् तु वाचिकम् ॥१९०॥
आज्ञा शिष्टिर्निराङ्‌निभ्यो देशो नियोगशासने ॥
अववादोऽन्यथाहूय प्रेषण प्रतिशासनम् ॥ १९१ ॥
सवित्सधाऽऽस्थाभ्युपायः सप्रत्याङ्भ्यः परः श्रव' ।
अङ्गीकारोऽभ्युपगमप्रतिज्ञाऽऽगूश्च सगरः ॥ १९२॥

कीर्ते ॥ अशुभा वाक् रुशती (त्रि० ), "उशती" एकम् अशुभवाच , ॥ शुभा वाक् कल्या, "काल्या" एक शुभवचनस्य ॥ चर्चरी, चर्भटी, द्वे हर्षक्रीडाया ॥ १८७ ॥ य सनिन्द उपालम्भ स परिभाषणम्, एक सनिन्दवचनस्य ॥ आपृच्छा, आलाप , सभाप , त्रय सभाषणस्य ॥ मुहुर्वच , अनुलाप , द्वे पौन पुन्यवचनस्य ॥ १८८ ॥ प्रलाप , एकम् अनथकवचनस्य ॥ विलाप , परिदेवनम्, द्वे रोदनपूर्वकवचनस्य ॥ उल्लाप , काकुवाक् , द्वे शोकभयादिविकृतध्वनिवचनस्य ॥ सलाप , सकथा, द्वे मिथोभाषणस्य ॥ १८९ ॥ विप्रलाप , विरुद्धोक्ति , द्वय विरुद्धवचनस्य ॥ अपलाप , निह्नव , द्वयमपलापस्य ॥ सुप्रलाप , सुवचनम् , द्वय शोभनवचनस्य ॥ सदेशवाक् , वाचिकम् , द्वय सदेशवचनस्य ॥ १९० ॥ आज्ञा, शिष्टि , निर्–आङ्–नि‌भ्य परो देशशब्द प्रयोज्यो यथा-निदेश , आदेश , निदेश , नियोग , शासनम्, अववाद , अष्टौ आज्ञाया ॥ आहूय आकार्य भृत्यादीना प्रेषणम् प्रतिशासनम्, एक भृत्यादिप्रेषणस्य ॥ १९१ ॥ सविद् (स्त्री० ), सधा, आस्था, अभ्युपाय , सम्–प्रति–आङ्–इभ्य श्रवशब्द प्रयोज्य यथा–सश्रव , प्रतिश्रव , आश्रव , अङ्गीकार , अभ्युपगम , प्रतिज्ञा,

गीतनृत्यवाद्यत्रय नाट्यं तौर्यत्रिकं च तत् ।
सगीत प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्मिका १९३
गीत गानं गेयं गीतिर्गान्धर्वमथ नर्त्तनम् ।
नटन नृत्य नृत्त च लास्य नाट्य च ताण्डवम् १९४
मण्डलेन तु यन्नृत्तं स्त्रीणां हल्लीसक हि तत् ।
पानगोष्ठ्यामुचताल रणे वीरजयन्तिका ॥ १९५ ॥
स्थानं नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः ।
अङ्गहारोऽङ्गविक्षेपो व्यञ्जकोऽभिनयः समौ १९६
स चतुर्विध आहार्यो रचितो भूषणादिना ।
वचसा वाचिकोऽङ्गेनाङ्गिक' सत्वेन सात्विकः १९७
स्यान्नाटक प्रकरण भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥१९८॥

---

आगू (स्त्री०), सगर, द्वावश अङ्गीकारस्य [समाधि] ॥१९२॥ नाट्यम्, तौर्यत्रिकम्, द्वय समुदितगीतनृत्यवाद्यत्रयस्य ॥ सगीतम्, एक प्रेक्षणार्थगीतनृत्यवाद्यत्रयस्य ॥ नाट्यधर्मिका, एक भरतादिशास्त्रोक्तगीतादित्रयस्य ॥ १९३ ॥ गीतम्, गानम्, गेयम्, गीति, गान्धर्वम्, पञ्च गीतस्य ॥ नर्तनम्, नटनम्, नृत्यम्, नृत्तम्, लास्यम्, नाट्यम्, ताण्डवम् (पु०न०), सप्त नर्तनस्य ॥ १९४ ॥ हल्लीसकम् (पु०न०), एक स्त्रीणा मण्डलाकारनृत्यस्य ॥ उच्चतालम्, एक पानार्थसभानृत्तस्य ॥ वीरजयन्तिका, एक युद्धनृत्तस्य ॥ १९५ ॥ रङ्ग, एक नाट्यस्थानस्य ॥ पूर्वरङ्ग, उपक्रम, द्वय गीतादिप्रारम्भस्य ॥ अङ्गहार, अङ्गविक्षेप, द्वय द्वात्रिंशद्भेदस्य नृत्यस्य ॥ व्यञ्जक, अभिनय, द्वय हस्तादिभिर्हृद्गतार्थप्रकाशनस्य ॥ १९६ ॥ भूषणादिना रचित आहार्य, वचसा रचित वाचिक, अङ्गेन रचित आङ्गिक, सत्त्वेन रचित सात्विक, चतुर्णामाहार्यादीनामभिनयानामेकैकम् ॥ १९७ ॥ नाटकम्, प्रकरणम्, भाण (पु०न०), प्रहसनम्, डिम, व्यायोग, समवकार, वीथी, अङ्क, "उत्सृष्टिकाङ्क" ईहामृग, दशाना

अशुभा वाक् शुभा कल्या चर्चरी चर्भटी समे १८७
यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ।
आपृच्छाऽऽलापः सभापोऽनुलापः स्यान्मुहुर्वचः ॥
अनर्थकं तु प्रलापो विलापः परिदेवनम् ।
उल्लापः काकुवागन्योऽन्योक्तिः सलापसंकथे १८९
विप्रलापो विरुद्धोक्तिरपलापस्तु निह्नवः ।
सुप्रलापः सुवचनं सदेशवाक् तु वाचिकम् ॥१९०।
आज्ञा शिष्टिर्निराङ्निभ्यो देशो नियोगशासने ।
अववादोऽप्यथाहूय प्रेषणं प्रतिशासनम् ॥ १९१ ।
सवित्सधाऽऽस्थाभ्युपायः सम्प्रत्याङ्भ्यः परः श्रवः
अङ्गीकारोऽभ्युपगमप्रतिज्ञाऽऽगूश्च सगरः ॥ १९२ ।

कीर्ते ॥ अशुभा वाक् रुशती (त्रि० ), "उशती" एकम् अशुभवाच , ॥ शुभा वाक् कल्या, "काल्या" एक शुभवचनस्य । चर्चरी, चर्भटी, द्वे हर्षक्रीडाया ॥ १८७ ॥ य सनिन्द उपालभ स परिभाषणम्, एक सनिन्दवचनस्य ॥ आपृच्छा, आलाप, सभाप, त्रय सभापणस्य ॥ मुहुर्वच, अनुलाप, द्वे पौन पुन्यवचनस्य ॥ १८८ ॥ प्रलाप, एकम् अनर्थकवचनस्य ॥ विलाप, परिदेवनम्, द्वे रोदनपूर्वकवचनस्य ॥ उल्लाप, काकुवाक्, द्वे शोकभयादिविकृतध्वनिवचनस्य ॥ सलाप, सकथा, द्वे मिथोभाषणस्य ॥ १८९ ॥ विप्रलाप, विरुद्धोक्ति, द्वय विरुद्धवचनस्य ॥ अपलाप, निह्नव, द्वयमपलापस्य ॥ सुप्रलाप, सुवचनम्, द्वय शोभनवचनस्य ॥ सदेशवाक्, वाचिकम्, द्वय सदेशवचनस्य ॥ १९० ॥ आज्ञा, शिष्टि, निर्-आङ्-निभ्य देभ्य परो देशशब्द प्रयोज्यो यथा-निदश, आदेश, निदेश, नियोग, शासनम्, अववाद, अष्टौ आज्ञाया ॥ आहूय आकार्य भृत्यादीना प्रेषणम् प्रतिशासनम्, एक भृत्यादिप्रेषणस्य ॥ १९१ ॥ सविद् (स्त्री० ), सधा, आस्था, अभ्युपाय, सम्-प्रति-आङ्-श देभ्य श्रवशब्द प्रयोज्य यथा-सश्रव, प्रतिश्रव, आश्रव, अङ्गीकार, अभ्युपगम, प्रतिज्ञा,

काय: कोलम्बकस्तस्या उपनाहो निबन्धनम् ॥२०४॥
दण्डः पुनः प्रवालः स्यात्ककुभस्तु प्रसेवकः ।
मूले वंशशलाका स्यात्कलिका कूणिकापि च २०५
कालस्य क्रियया मानं तालः साम्यं पुनर्लयः ।
द्रुतं विलम्बितं मध्यमोघस्तत्त्वं घनं क्रमात् ॥२०६॥
मृदङ्गो मुरज[1] सोऽङ्क्यालिङ्ग्यूर्ध्वक इति त्रिधा ।
स्याद्यशः पटहो ढक्का भेरी दुन्दुभिरानकः ॥ २०७ ॥
पटहोऽथ शारिका स्यात्कोणो वीणादिवादनम् ॥
शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ॥ २०८ ॥

---

नारिका, खुङ्गणी ] ॥ तस्या वीणाया काय शरीर कोलम्बक, एक तन्त्रीरहितदण्डस्य ॥ उपनाह, निबन्धनम्, द्वय वीणातन्त्रीबन्धनस्थानस्य ॥ २०४ ॥ प्रवाल (पु०न०), एक वीणादण्डस्य ॥ ककुभ, प्रसेवक, द्वे चर्मावनद्धदारुमयभाण्डस्य ॥ वंशशलाका, कलिका, कूणिका, त्रीणि कूणिकाया "खिली' इति भाषायाम्॥२०५॥ क्रियया कालस्य मान ताल, एक तालस्य ॥ वाद्यादीनामन्योन्य साम्य लय, एक लयस्य ॥ ओघ, एक शीघ्रनृत्यादे ॥ तत्वम्, एक विलम्बितनृत्यादे ॥ घनम्, एकम् अद्रुताविलम्बितनृत्यादे । नाट्ये तु द्रुतादिलयानुसारेण क्रमादोघाद्या वाद्यप्रकारा स्यु ॥ २०६ ॥ मृदङ्ग, मुरज, द्वे मृदङ्गस्य ॥ अङ्क्य, आलिङ्गी, ऊर्ध्वक, त्रयाणा मृदङ्गभेदाना प्रत्येकमेकैकम् । यदुक्तम्—"हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वक ॥ आलिङ्ग्यश्चैव गोपुच्छो मध्यदक्षिणवामगा " ॥ १ ॥ यश पटह, ढक्का, द्वे ढक्काया ॥ भेरी (स्त्री०), दुन्दुभि (पु०), आनक, ॥२०७॥ पटह, चत्वारि भेर्या । तत्र आनक (पु०न०), पटह (पु०न०), द्वय पटहस्येत्यन्ये ॥ शारिका, कोण (पु०न०), वीणादिवादनकाष्ठस्य ॥ शृङ्गार (पु०न०), हास्य, करुण, रौद्र, वीर, भयानक

---

1 भागुरिस्तु अनुगतम् इत्याह ।

अभिनेयप्रकाराः स्युर्भाषाः षट् संस्कृतादिकाः ।
भारती सात्वती कैशिक्यारभट्यौ च वृत्तयः १९९
वाद्यं वादित्रमातोद्यं तूर्यं तूरं सरध्वजः ।
ततं वीणाप्रभृतिकं तालप्रभृतिकं घनम् ॥ २०० ॥
वंशादिकं शुषिरमानद्धं मुरजादिकम् ।
वीणा पुनर्घोषवती विपञ्ची कण्ठकूणिका ॥ २०१ ॥
वल्लकी साऽथ तन्त्रीभिः सप्तभिः परिवादिनी ।
शिवस्य वीणाऽनालम्बी सरस्वत्यास्तु कच्छपी २०२
नारदस्य तु महती गणाना तु प्रभावती ।
विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती ॥२०३॥
चण्डालानां तु कटोलवीणा चाण्डालिका च सा ।

---

निबन्धप्रकाराणामेकैकम् ॥ १९८ ॥ संस्कृता, प्राकृता, मागधी, शौरसेनी, पैशाची, अपभ्रंशा, षण्णां भाषाणामेकैकम् ॥ भारती, सात्वती, कैशिकी, आरभटी, चतसृणां वृत्तीनामेकैकम्, ॥ १९९ ॥ वाद्यम्, वादित्रम्, आतोद्यम्, तूर्यम् (पु०न०), तूरम्, सरध्वज, षट् वाद्यस्य ॥ ततम्, एकं वीणादिवाद्यस्य ॥ घनम्, एकं कांस्यतालादिवाद्यस्य ॥ २०० ॥ शुषिरम्, "सुषिरम्" एकं वंशादिवाद्यस्य ॥ आनद्धम्, एकं मृदङ्गादिवाद्यस्य ॥ वीणा, घोषवती, विपञ्ची, कण्ठकूणिका, ॥२०१॥ वल्लकी, पञ्च वीणायाः ॥ सा वीणा सप्तभिः तन्त्रीभिरुपलक्षिता परिवादिनी, एकं "सतार" इति भाषायाम् ॥ अनालम्बी, एकं शिववीणायाः ॥ कच्छपी, एकं सरस्वतीवीणायाः, ॥ २०२ ॥ महती, एकं नारदवीणायाः[1] ॥ प्रभावती, एकं गणानां वीणायाः ॥ बृहती, एकं विश्वावसुवीणायाः ॥ कलावती, एकं तुम्बुरुवीणायाः ॥२०३॥ कटोलवीणा, चाण्डालिका, द्वे चण्डालवीणायाः [ यष्टी, काण्डवीणा, शुवीणा, हक्कारी, किंनरी,

---

१ विचित्रैरक्षरारैथ देवो दीव्यसर्मा रते । बबन्ध यच्छिसापाद्य केचिद्वी तत्र निर्मिता ॥ १ ॥

अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका ।
अध्यवसाय ऊर्जोऽथ वीर्यं सोऽतिशयान्वितः २१४
भय भीर्भीतिरातङ्क आशङ्का साध्वस दरः ।
भिया च तद्याहिभय भूपतीना स्वपक्षजम् ॥ २१५
अदृष्ट वह्नितोयादेर्दृष्ट स्वपरचक्रजम् ।
भयङ्करं प्रतिभय भीमं भीष्म भयानकम् ॥२१६॥
भीपण भैरवं घोरं दारुण च भयावहम् ।
जुगुप्सा तु घृणाऽथ स्याद्विस्मयश्चित्रमद्भुतम्॥२१७
चोद्याश्चर्यं शमः शान्तिः शमथोपशमावपि ।
तृष्णाक्षयः स्थायिनोऽमी रसानां कारणं क्रमात् ॥२१८
स्तम्भो जाड्य स्वेदो घर्मनिदाघौ पुलकः पुनः ।

॥ २१३ ॥ अभियोग, उद्यम, (पु०न०), प्रौढि, उद्योग, कियदेतिका, अध्यवसाय, ऊर्ज, नव उद्यमस्य ॥ वीर्यम्, एकम् अतिशयोत्साहस्य । वीरस्य कर्मण इत्यन्ये ॥ २१४ ॥ भयम्, भी, भीति, आतङ्क, आशङ्का, साध्वसम्, दर (पु०न०), भिया, अष्टौ भयस्य ॥ तद् भय भूपतीना स्वपक्षज चेत् अहिभयम्, एक राजपुत्रादिभयस्य ॥ २१५ ॥ अदृष्टम्, एक वह्निवारिपिशाचादिभयस्य ॥ दृष्टम्, एक स्वपरराष्ट्रभयस्य ॥ भयकरम्, प्रतिभयम्, भीमम्, भीष्मम, भयानकम्, ॥ २१६ ॥ भीपणम्, भैरवम्, घोरम्, दारुणम्, भयावहम्, दश भयकरस्य [ डमरम्, आभीलम्, भासुरम्, ] ॥ जुगुप्सा, घृणा, द्वय चित्तसकोचस्य ॥ विस्मय, चित्रम्, अद्भुतम्, ॥ २१७ ॥ चोद्यम्, आश्चर्यम्, पञ्च विस्मयस्य [ कुहकम्, मोह, वीक्ष्यम्, ] ॥ शम, शान्ति, शमथ, उपशम, तृष्णाक्षय, पञ्च शान्ते ॥ अमी रत्यादय स्थायिन रसाना शृङ्गारादीना कारणानि भवन्ति ॥ २१८ ॥ स्तम्भ, जाड्यम्, द्वय विष्टब्धचेतनस्य ॥ "जड थवु" ड० भा० ॥ स्वेद, घर्म, निदाघ, त्रय घर्मस्य ॥ पुलक (पु० न०),

वीभत्साद्भुतशान्ताश्च रसा भावाः पुनस्त्रिधा ।
स्थायिसात्त्विकसंचारिप्रभेदैः स्याद्रतिः पुनः २०९
रागोऽनुरागोऽनुरतिर्हासस्तु हसनं हसः ।
घर्घरो हासिका हास्यं तत्राद्दष्टरदे स्मितम् ॥२१०॥
वक्रोष्ठिकाऽथ हसितं किंचिद्दृष्टरदाङ्कुरे ।
किञ्चिच्छ्रुते विहसितमट्टहासो महीयसि ॥ २११ ॥
अतिहासस्त्वनुस्यूतेऽपहासोऽकारणात् कृते ॥
सोत्प्रासे त्वाच्छुरितकं हसनं स्फुरदोष्ठके ॥२१२॥
शोकः शुक् शोचनं खेदः क्रोधो मन्युः क्रुधा रुषा ।
क्रुत्कोपः प्रतिघो रोषो रुट् चोत्साहः प्रगल्भता२१३

॥२०८॥ वीभत्स, अद्भुत, शान्त, (सर्वे पु०) नवानां शृङ्गारादिरसानामेकैकम् । दशमो वात्सल्यरसोऽस्ति । यदुक्तम्—"शृङ्गारवीरौ वीभत्स रौद्र हास्य भयानकम् । करुणा चाद्भुत शान्त वात्सल्य च रसा दश" ॥१॥ इति नपुंसकमप्याहु ॥ रस (पु०न०), इत्येकम् ॥ स्थायिन, सात्त्विका, सचारिणः, "व्यभिचारिण" त्रयाणां भावानामेकैकम् ॥ रति, ॥ २०९ ॥ राग, अनुराग, अनुरति, चत्वारि रागस्य ॥ हास, हसनम्, हस, घर्घर, हासिका, हास्यम्, षड् हासस्य ॥ तत्र हासे अदृष्टरदे स्मितम्, ॥ २१० ॥ वक्रोष्ठिका (स्त्री०न०), द्वे स्मितस्य ॥ हसितम्, एकं किंचिद्दृष्टरदाङ्कुरहासस्य ॥ विहसितम्, एकं सशब्दहासस्य । यदुक्तम्—"आकुञ्चिताक्षिगण्ड यत् सस्वन मधुर तथा । कालागत सास्यरागं तद्वै विहसित भवेत्" ॥ १ ॥ अट्टहास, एकं महाशब्दयुक्तहासस्य ॥ २११ ॥ अतिहास, एकमतिशयहासस्य ॥ अपहास, एकमकारणहासस्य ॥ आच्छुरितकम्, एकं सोपहासहासस्य ॥ हसनम्, एकं स्फुरदोष्ठहासस्य ॥ २१२ ॥ शोक, शुक् (स्त्री०), शोचनम्, खेद, चत्वारि खेदस्य ॥ क्रोध, मन्यु (पु०), क्रुधा, रुषा, क्रुत् (स्त्री०) क्रुधौ क्रुध, कोप, प्रतिघ, रोष, रुट् (स्त्री०) रुषौ रुष, नव क्रोधस्य ॥ उत्साह, प्रगल्भता,

अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका ।
अध्यवसाय ऊर्जोऽथ वीर्यं सोऽतिशयान्वितः २१४
भय भीर्भीतिरातङ्क आशङ्का साध्वस दरः ।
भिया च तच्चाहिभय भूपतीनां स्वपक्षजम् ॥ २१५
अदृष्ट वह्नितोयादेर्दृष्ट स्वपरचक्रजम् ।
भयङ्करं प्रतिभय भीमं भीष्म भयानकम् ॥२१६॥
भीषण भैरव घोरं दारुण च भयावहम् ।
जुगुप्सा तु घृणाऽथ स्याद्विस्मयश्चित्रमद्भुतम्॥२१७
चोद्याश्चर्यं शमः शान्तिः शमथोपशमावपि ।
तृष्णाक्षयः स्थायिनोऽमी रसानां कारणं क्रमात् ॥२१८
स्तम्भो जाड्य स्वेदो घर्मनिदाघौ पुलकः पुनः ।

---

॥ २१३ ॥ अभियोग , उद्यम , (पु०न०), प्रौढि , उद्योग , कियदेतिका, अध्यवसाय , ऊर्ज , नव उद्यमस्य ॥ वीर्यम्, एकम् अतिशयोत्साहस्य । वीरस्य कर्मण इत्यन्ये ॥ २१४ ॥ भयम्, भी , भीति , आतङ्क , आशङ्का, साध्वसम्, दर (पु०न०), भिया, अष्टौ भयस्य ॥ तद् भय भूपतीना स्वपक्षज चेत् अहिभयम्, एक राजपुत्रादिभयस्य ॥ २१५ ॥ अदृष्टम्, एक वह्निवारिपिशाचादिभयस्य ॥ दृष्टम्, एक स्वपरराष्ट्रभयस्य ॥ भयकरम्, प्रतिभयम्, भीमम्, भीष्मम्, भयानकम्, ॥ २१६ ॥ भीषणम्, भैरवम्, घोरम्, दारुणम्, भयावहम्, दश भयकरस्य [ डमरम्, आभीलम्, भासुरम्,] ॥ जुगुप्सा, घृणा, द्वय चित्तसकोचस्य ॥ विस्मय , चित्रम्, अद्भुतम्, ॥ २१७॥ चोद्यम्, आश्चर्यम्, पञ्च विस्मयस्य [ फुल्लम्, मोह , वीक्ष्यम्, ] ॥ शम , शान्ति , शमथ , उपशम , तृष्णाक्षय , पञ्च शान्ते ॥ अमी रत्यादय स्थायिन रसाना शृङ्गारादीना कारणानि भवन्ति ॥ २१८ ॥ स्तम्भ , जाड्यम्, द्वय विष्टब्धचेतनस्य ॥ "जड थवु" इ० भा० ॥ स्वेद , घर्म , निदाघ , त्रय घर्मस्य ॥ पुलक (पु० न०),

रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम् ॥ २१९ ॥
रोमोद्गम उद्धुषणमुल्लकसनमित्यपि ।
स्वरभेदस्तु कल्लत्व स्वरे कम्पस्तु वेपथुः ॥ २२० ॥
वैवर्ण्यं कालिकाऽथाश्रु बाष्पो नेत्राम्बु रोदनम् ।
अस्रमस्रु प्रलयस्त्वचेष्टतेत्यष्टसात्त्विकाः ॥ २२१ ॥
धृतिः सतोषः स्वास्थ्य स्यादाध्यान स्मरणं स्मृतिः ।
मतिर्मनीषा बुद्धिर्धीर्धिषणाज्ञप्तिचेतनाः ॥ २२२ ॥
प्रतिभाप्रतिपत्प्रज्ञाप्रेक्षाचिदुपलब्धयः ।
संवित्तिः शेमुषी दृष्टिः सा मेधा धारणक्षमा ॥२२३॥
पण्डा तत्त्वानुगा मोक्षे ज्ञानं विज्ञानमन्यत. ।
शुश्रूषा श्रवणं चैव ग्रहण धारण तथा ॥ २२४ ॥
ऊहोऽपोहोऽर्थविज्ञान तत्त्वज्ञान च धीगुणाः ।

---

रोमाञ्च , कण्टक (पु० न०), रोमविकार , रोमहर्षणम् , ॥२१९॥ रोमोद्गम , उद्धुषणम् , उल्लकसनम् , अष्टौ रोमाञ्चस्य ॥ स्वरे कल्लत्वमव्यक्तत्व स्वरभेद , एकमव्यक्तस्वरस्य ॥ कम्प , वेपथु , (पु०), द्वय कम्पस्य ॥ २२० ॥ वैवर्ण्यम् , कालिका, द्वे वैवर्ण्यस्य ॥ अश्रु, बाष्प (पु० न०), नेत्राम्बु, रोदनम्, अस्रम्, "अश्रम्" अस्रु, षट् नेत्रोदकस्य [ लोत ] ॥ प्रलय , अचेष्टता, द्वय मूर्च्छाया ॥ इत्यष्टौ सात्त्विका ॥ २२१ ॥ धृति , सतोष , स्वास्थ्यम् , त्रय सतोषस्य ॥ आध्यानम् , स्मरणम् , स्मृति , त्रय स्मरणस्य ॥ मति , मनीषा, बुद्धि , धी , धिषणा, ज्ञप्ति , चेतना, ॥ २२२ ॥ प्रतिभा, प्रतिपद् , प्रज्ञा, प्रेक्षा, चिद् , उपलब्धि , संवित्ति , शय मोह मुष्णाति–शेमुषी, दृष्टि , षोडश बुद्धे ॥ सा मति धारणक्षमा मेधा, एक धारणसमर्थबुद्धे ॥ २२३ ॥ पण्डा, एक तत्त्वानुगामिबुद्धे ॥ ज्ञानम् , एक मोक्षविषयकबुद्धे ॥ विज्ञानम् , एक शिल्पशास्त्रादिविषयकबुद्धे ॥ शुश्रूषा, श्रवणम् , ग्रहणम् , धारणम् अविस्मरणम् , ॥ २२४ ॥ ऊह , अपोह असत्पक्षखण्डनम् , अर्थविज्ञानम् ,

व्रीडा लज्जा मन्दाक्षं ह्रीस्त्रपा साऽपत्रपाऽन्यतः॥२२५॥
जाड्यं मौर्ख्यं विषादोऽवसादः सादो विषण्णता ।
मदो मुन्मोहसंभेदो व्याधिस्त्वाधी रुजाकरः॥ २२६॥
निद्रा प्रमीला शयनं संवेशस्वापसंलयाः ।
नन्दीमुखी श्वासहेतिस्तन्द्रा सुप्तं तु साधिका ॥२२७॥
औत्सुक्य रणरणकोत्कण्ठे आयल्लकारती ।
हृल्लेखोत्कलिके चाथावहित्थाऽऽकारगोपनम् ॥ २२८॥
शङ्काऽनिष्टोत्प्रेक्षण स्याच्चापल त्वनवस्थितिः ।
आलस्यं तन्द्रा कौसीद्यं हर्षश्चित्तप्रसन्नता॥ २२९ ॥

---

तत्त्वज्ञानम्, अष्टाना बुद्धिगुणानामेकैकम् ॥ व्रीडा, "व्रीड" लज्जा, मन्दाक्षम्, ह्री, त्रपा, पञ्च लज्जाया ॥ सा लज्जा अन्यत अपत्रपा, एकमन्यतो जातलज्जाया ॥ २२५ ॥ जाड्यम्, मौर्ख्यम्, द्वय मूर्खताया ॥ विषाद, अवसाद, साद, विषण्णता, चत्वारि विषादस्य ॥ मुन्मोहसभेद आनन्द-मोहयो सगम मद, एक मदस्य ॥ रुजाकर आधि व्याधि (पु०), एक रुजाकरमानसव्यथाया ॥ २२६ ॥ निद्रा, प्रमीला, शयनम्, सवेश, स्वाप, सलय, नन्दीमुखी, श्वासहेति (स्त्री०), तन्द्रा, "तन्द्री, तन्द्रि" नव निद्राया । तत्र तन्द्री, प्रमीला, द्वे निद्राया आदौ अन्ते च यदालस्य तस्ये-त्यन्ये । नन्दीमुखी, श्वासहेति, द्वौ सुप्तस्य इत्यन्ये [तामसी] ॥ सुप्तम्, एकमतिशयनिद्राया ॥ २२७ ॥ औत्सुक्यम्, रण-रणक, उत्कण्ठा, "उत्कण्ठ" आयल्लकम्, अरति (स्त्री०), हृल्लेख, उत्कलिका, सप्त औत्सुक्यस्य ॥ अवहित्था (स्त्री० न०), आकारगोपनम्, द्वय भ्रूविकारमुखरागाद्याकारगोपनस्य ॥ २२८ ॥ अनिष्टोत्प्रेक्षणम् शङ्का, एकमनिष्टसभावनस्य ॥ चापलम्, अनवस्थिति, द्वे चापलस्य ॥ आलस्यम्, तन्द्रा, कौसीद्यम्, त्रयमालस्यस्य ॥ हर्ष, चित्तप्रसन्नता, ॥ २२९ ॥

ह्लादः प्रमोदः प्रमदो मुत्प्रीत्यामोदसंमदाः ।
आनन्दानन्दथू गर्वस्त्वहंकारोऽवलिप्तता ॥ २३० ॥
दर्पोऽभिमानो ममता मानश्चित्तोन्नतिः स्मयः ।
स मिथोऽहमहमिका या तु सभावनाऽऽत्मनि ॥२३१॥
दर्पात्साऽऽहोपुरुषिका स्यादहंपूर्विका पुनः ।
अहपूर्वमहपूर्वमित्युग्रत्व तु चण्डता ॥ २३२ ॥
प्रबोधस्तु विनिद्रत्व ग्लानिस्तु बलहीनता ।
दैन्यं कार्पण्यं श्रमस्तु क्लमः क्लेशः परिश्रमः ॥२३३ ॥
प्रयासायासव्यायामा उन्मादश्चित्तविप्लव. ।
मोहो मौढ्य चिन्ता ध्यानममर्ष क्रोधसभवः॥२३४॥
गुणो जिगीषोत्साहवान् त्रासस्त्वाकस्मिक भयम् ॥

---

ह्लाद , प्रमोद , प्रमद , मुद् (स्त्री०) मुदौ मुद , प्रीति , आमोद , समद , आनन्द , आनन्दथु (पु०), एकादश हर्षस्य ॥ गर्व (पु० न०), अहकार , अवलिप्तता, ॥ २३० ॥ दर्प , अभिमान , ममता, मान (पु० न०), चित्तोन्नति , स्मय , नव गर्वस्य ॥ स गर्व मिथश्चेत् अहमहमिका, एक परस्परमहकारस्य ॥ दर्पात् आत्मनि या सभावना सा आहोपुरुषिका, एकमात्मसामर्थ्याविष्करणस्य ॥ अहपूर्वमहपूर्वमिति अहपूर्विका इत्येकम् ॥ उग्रत्व, चण्डता, द्वे उग्रत्वस्य ॥ २३१ ॥ २३२ ॥ प्रबोध , विनिद्रत्वम्, द्वय प्रबोधस्य ॥ “जागवु” इ० भा० ॥ ग्लानि , बलहीनता, द्वे ग्लान्या ॥ दैन्यम्, कार्पण्यम्, द्वे दैन्यस्य ॥ श्रम , क्लम , क्लेश , परिश्रम , ॥ २३३ ॥ प्रयास , आयास , व्यायाम , सप्त श्रमस्य ॥ उन्माद , चित्तविप्लव , द्वे उन्मादस्य ॥ मोह , मौढ्यम्, द्वे मोहस्य ॥ चिन्ता, ध्यानम्, द्वे चिन्तनस्य ॥ य क्रोधसभव क्रोधाद् जात॰ जिगीषोत्साहयुक्तो गुण स अमर्ष , एकममर्षस्य ॥ आकस्मिक भयम् त्रास , इति एकम् । त्रासे

अपस्मारः स्यादावेशो निर्वेदः स्वावमाननम् ॥ २३५ ॥
आवेगस्तु त्वरिस्तूर्णिः सवेगः सम्भ्रमस्त्वरा ।
वितर्कः स्यादुन्नयनं परामर्शो विमर्शनम् ॥ २३६ ॥
अध्याहारस्तर्क ऊहोऽसूयाऽन्यगुणदूषणम् ।
मृतिः संस्था मृत्युकालौ परलोकगमोऽत्ययः ॥ २३७ ॥
पञ्चत्वं निधनं नाशो दीर्घनिद्रा निमीलनम् ।
दिष्टान्तोऽस्तं कालधर्मोऽवसानं सा तु सर्वगा॥२३८॥
मरको मारिस्त्रयस्त्रिंशदमी स्युर्व्यभिचारिणः ।
स्युः कारणानि कार्याणि सहचारीणि यानि च ॥२३९॥
रत्यादेः स्थायिनो लोके तानि चेत्काव्यनाट्ययोः ।
विभावा अनुभावाश्च व्यभिचारिण एव च ॥ २४० ॥
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो भवेद्रसः ।

---

न पूर्वापरविमर्शः, अतो भयाद् भिन्न ॥ अपस्मार, एकम् वातुवेपथ्यादेरावेशस्य ॥ निर्वेद, एक स्वस्यावमाननस्य ॥२३४ ॥ २३५॥ आवेग, त्वरि (स्त्री०), तूर्णि (स्त्री०), सवेग, सम्भ्रम, त्वरा, पट् त्वरायाः ॥ वितर्क, उन्नयनम्, परामर्श, विमर्शनम्, ॥ २३६ ॥ अध्याहार, तर्क (पु० न०), ऊह, "ऊहा" सप्त तर्कस्य ॥ यत् अन्यगुणदूषण सा असूया, एक गुणेषु दोषारोपस्य ॥ मृति, संस्था, मृत्यु, (पु० स्त्री०), काल, परलोकगम, अत्यय ॥ २३७ ॥ पञ्चत्वम्, निधनम् (पु० न०), नाश, दीर्घनिद्रा, निमीलनम्, "मीलनम्" दिष्टान्त, अस्तम्, कालधर्म, अवसानम्, पञ्चदश मृत्यो ॥ २३८ ॥ सा मृति सवगा चेत् मरक (पु० न०), मारि (स्त्री०), द्वय मारे ॥ अमी धृत्याद्य त्रयस्त्रिंशद् व्यभिचारिणो भवन्ति ॥ लोके रत्यादे स्थायिन यानि कारणानि स्त्र्युद्यानानि, तानि काव्यनाट्यशास्त्रयो विभावा उच्यन्ते । कार्याणि कटाक्षभुजाक्षेपादीनि अनुभावा उच्यन्ते । सहचारीणि धृत्यादीनि व्यभिचारिण उच्यन्ते ॥ २३९ ॥ २४० ॥ तै विभावाद्यै व्यक्त सामाजि-

पात्राणि नाट्येऽधिकृतास्तत्तद्वेषस्तु भूमिका ॥ २४१ ॥
शैलूषो भरतः सर्वकेशी भरतपुत्रकः ।
धर्मी पुत्रो रङ्गजायाऽऽजीवो रङ्गावतारकः ॥ २४२ ॥
नटः कृशाश्वी शैलाली चारणस्तु कुशीलवः ।
भ्रभ्रुभ्रूभृपरः कुसो नटः स्त्रीवेषधारकः ॥ २४३ ॥
वेश्याऽऽचार्य. पीठमर्दः सूत्रधारस्तु सूचकः ।
नन्दी तु पाठको नान्द्याः पार्श्वस्थः पारिपार्श्विकः॥२४४
वासन्तिक' केलिकिलो वैहासिको विदूषकः ।
प्रहासी प्रीतिदश्चाथ पिङ्ग पल्लवको विटः ॥ २४५ ॥
पिता त्वावुक आवुत्तभावुकौ भगिनीपतौ ।
भावो विद्वान्युवराजः कुमारो भर्तृदारकः ॥ २४६ ॥

काना वासनारूपेण य स्थित स स्थायी भावो रस उच्यते ॥ स्ववेष पातीति पात्रम्, एक नाट्ये अधिकृतस्य पुरुषादे ॥ तत्तद्वेष भूमिका, एक रूपान्तरपरिग्रहस्य ॥ २४१ ॥ शैलूष, भरत, सर्वकेशी, भरतपुत्रक, धर्मीपुत्र, रङ्ग—जायाशब्दाभ्या पर आजीवशब्दो यथा—रङ्गाजीव, जायाजीव, रङ्गावतारक, ॥ २४२ ॥ नट, कृशाश्वी, शैलाली, एकादश नटस्य ॥ चारण, कुशीलव, द्वय चारणस्य ॥ भ्र–भ्रु–भ्रू–भृशब्देभ्य पर कुसशब्दो यथा—भ्रकुस, भ्रुकुस, भ्रकुस, भृकुस, चत्वारि स्त्रीवेषधारिनटस्य ॥ २४३ ॥ वेश्याचार्य, पीठमर्द, द्वे नर्तन शिक्षकस्य ॥ सूत्रधार, सूचक, द्वे सूत्रधारस्य [ स्थापर, बीजदर्शक ] ॥ नन्दी, एक नान्दीपाठकस्य ॥ पार्श्वस्थ, पारि, पार्श्विक, द्वय पार्श्वस्थस्य ॥ २४४ ॥ वासन्तिक, केलिकिल, वैहासिक, विदूषक, प्रहासी, प्रीतिद, षट् विदूषकस्य ॥ पिङ्ग, पल्लवक, विट (पु० ७०), त्रय विटस्य ॥ २४५ ॥ आवुक, एक पितु ॥ आवुत्त, भावुक, द्वे भगिनीपते ॥ भाव, एक विदुष ॥ कुमार, भर्तृदारक, द्वय युवराजस्य ॥ २४६ ॥

वाला वासूर्मार्षं आर्यो देवो भट्टारको नृपः ।
राष्ट्रियो नृपते¹ श्यालो दुहिता भर्तृदारिका ॥ २४७॥
देवी कृताभिषेकाऽन्या भट्टिनी गणिकाऽज्जुका ।
नीचाचेटीसखीहूतौ हण्डेहञ्जेहलाः क्रमात् ॥२४८ ॥
अब्रह्मण्यमवध्योक्तौ ज्यायसी तु स्वसाऽत्तिका ।
भर्ताऽऽर्यपुत्रो माताम्बा भदन्ताः सौगताद्यः ॥२४९॥
पूज्ये तत्रभवानत्रभवाश्च भगवानपि ।
पादा भट्टारको देव. प्रयोज्यः पूज्यनामतः ॥ २५० ॥

इति श्रीमद्-हेमचन्द्राचार्यविरचिताया श्रीअभिधानचिन्तामणि नाममालाया द्वितीयो देवकाण्ड ॥

---

वासू, एक कुमार्या ॥ मार्ष, "मारिप, मार्षक" आर्य, द्वे आर्यस्य ॥ देव, भट्टारक, द्वे नृपस्य ॥ राष्ट्रिय, एक राजश्यालस्य ॥ भर्तृदारिका, एक राजकन्याया ॥ २४७ ॥ कृताभिषेका चेत् देवी, एकमभिषिक्तनृपस्त्रिया ॥ भट्टिनी, एकमनभिषिक्तनृपस्त्रिया ॥ अज्जुका, एक गणिकाया ॥ नीचाया आह्वाने हण्डे, चेट्या आह्वाने हञ्जे, सख्या आह्वाने हला, (त्रीणि अव्ययानि) प्रत्येकमेकैकम् ॥ २४८ ॥ अब्रह्मण्यम, एकम् अवध्यब्राह्मणादेर्दोषवचनस्य । अवधयाच्याया इत्यन्ये ॥ अत्तिका, एक ज्येष्ठभगिन्या ॥ आर्यपुत्र, एक पत्यु ॥ अम्बा, माता, द्वे जनन्या ॥ भदन्त, एक सौगतादीना निर्ग्रन्थादीना च ॥ २४९ ॥ पूज्य, तत्रभवान्, अत्रभवान्, भगवान्, चत्वारि पूज्यस्य ॥ पादा, भट्टारक, देव, त्रय पूज्यनाम्न अग्रे प्रयोज्यम् यथा—तातपादा अर्हद्भट्टारका, सिद्धदेव, [ भरटक, भट्ट ] ॥

इति परमार्हतकुमारपालभूपालप्रतिबोधकश्रीकलिकालसर्वज्ञश्रीमद्धेमचन्द्राचार्यविनिर्मिताभिधानचिन्तामणिनाममालाया (अपरनामहैमीकोशस्य) स्वोपज्ञतत्त्वाभिधायिनीवृत्त्यनुसारिणीरत्नप्रभा व्याख्याया द्वितीयो देवकाण्ड ॥

---

१ "सर्वस्त्रीभि पतिव्याच्य आर्यपुत्रेति यौवने" इति भरत ॥

पात्राणि नाट्येऽधिकृतास्तत्तद्वेषस्तु भूमिका ॥ २४१ ॥
शैलूषो भरतः सर्वकेशी भरतपुत्रकः ।
धर्मी पुत्रो रङ्गजायाऽऽजीवो रङ्गावतारकः ॥ २४२ ॥
नट' कृशाश्वी शैलाली चारणस्तु कुशीलवः ।
भ्रभ्रुभ्रूभृपरः कुसो नटः स्त्रीवेषधारकः ॥ २४३ ॥
वेश्याऽऽचार्य पीठमर्दः सूत्रधारस्तु सूचकः ।
नन्दी तु पाठको नान्द्याः पार्श्वस्थः पारिपार्श्विकः॥२४४
वासन्तिकः केलिकिलो वैहासिको विदूषकः ।
प्रहासी प्रीतिदश्चाथ षिड्ग पल्लवको विटः ॥ २४५ ॥
पिता त्वावुक आवुत्तभावुकौ भगिनीपतौ ।
भावो विद्वान्युवराजः कुमारो भर्तृदारकः ॥ २४६ ॥

---

कान। वासनारूपेण य स्थित स स्थायी भावो रस उच्यते ॥ स्ववेष पातीति पात्रम्, एक नाट्ये अधिकृतस्य पुरुषादे ॥ तत्तद्वेष भूमिका, एक रूपान्तरपरिग्रहस्य ॥ २४१ ॥ शैलूष, भरत, सर्वकेशी, भरतपुत्रक, धर्मीपुत्र, रङ्ग—जायाशब्दाभ्या पर आजीवशब्दो यथा—रङ्गाजीव, जायाजीव, रङ्गावतारक, ॥ २४२ ॥ नट, कृशाश्वी, शैलाली, एकादश नटस्य ॥ चारण, कुशीलव, द्वय चारणस्य ॥ भ्र—भ्रु—भ्रू—भृशब्देभ्य पर कुसशब्दो यथा—भ्रकुस, भ्रुकुस, भ्रकुस, भृकुस, चत्वारि स्त्रीवेषधारिनटस्य ॥ २४३ ॥ वेश्याचार्य, पीठमर्द, द्वे नर्तन शिक्षकस्य ॥ सूत्रधार, सूचक, द्वे सूत्रधारस्य [ स्थापक, बीजदर्शक ] ॥ नन्दी, एक नान्दीपाठकस्य ॥ पार्श्वस्थ, पारि, पार्श्विक, द्वय पार्श्वस्थस्य ॥ २४४ ॥ वासन्तिक, केलिकिल, वैहासिक, विदूषक, प्रहासी, प्रीतिद, षट् विदूषकस्य ॥ पिङ्ग, पल्लवक, विट (पु० न०), त्रय विटस्य ॥ २४५ ॥ आवुक, एक पितु ॥ आवुत्त, भावुक, द्वे भगिनीपते ॥ भाव, एक विदुष ॥ कुमार, भर्तृदारक, द्वय युवराज्य ॥ २४६ ॥

व्यक्तो विपश्चित्संख्यावान् सन् प्रवीणे तु शिक्षितः ।
निष्णातो निपुणो दक्षः कर्महस्तमुखाः कृतात् ॥ ६ ॥
कुशलश्चतुरोऽभिज्ञविज्ञवैज्ञानिकाः पटुः ।
छेको विदग्धे प्रौढस्तु प्रगल्भः प्रतिभान्वितः[1] ॥ ७ ॥
कुशाग्रीयमतिः सूक्ष्मदर्शी तत्कालधीः पुनः ।
प्रत्युत्पन्नमतिर्दूराद् यः पश्येद्दीर्घदर्श्यसौ ॥ ८ ॥
हृदयालुः सहृदयश्चिद्रूपोऽप्यथ संस्कृते ।
व्युत्पन्नप्रहतक्षुण्णा अन्तर्वाणिस्तु शास्त्रवित् ॥ ९ ॥
वागीशो वाक्पती वाग्मी वाचोयुक्तिपटुः प्रवाक् ।
समुखो वावदूकोऽथ वद्रो वक्ता वदावदः ॥ १० ॥
स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।

बुधः, मनुष्यः, ॥ ५ ॥ व्यक्तः, विपश्चित्, संख्यावान्, सन्, पञ्चविंशतिर्विदुषः ॥ प्रवीणः, शिक्षितः, निष्णातः, निपुणः, दक्षः, कृतशब्दात् परे कर्म-हस्त-मुखशब्दाः यथा—कृतकर्मा, कृतहस्तः, कृतमुखः, ॥ ६ ॥ कुशलः, चतुरः, अभिज्ञः, विज्ञः, वैज्ञानिकः, पटुः, चतुर्दश प्रवीणस्य ॥ छेकः, "छेकालः, छेकिलः" विदग्धः, द्वे दक्षतरस्य ॥ प्रौढः, प्रगल्भः, प्रतिभान्वितः, त्रीणि प्रतिभाशालिनः ॥ ७ ॥ कुशाग्रीयमतिः, सूक्ष्मदर्शी, द्वे सूक्ष्मदर्शिनः ॥ तत्कालधीः, प्रत्युत्पन्नमतिः, द्वे प्रत्युत्पन्नमतेः ॥ दीर्घदर्शी, एकं दूरदर्शिनः ॥ ८ ॥ हृदयालुः, सहृदयः, चिद्रूपः, त्रीणि सत्पुरुषज्ञानिनः ॥ संस्कृतः, व्युत्पन्नः, प्रहतः, क्षुण्णः, चत्वारि शास्त्रादितत्त्वविदः ॥ अन्तर्वाणिः, शास्त्रवित्, द्वे बहुशास्त्रदर्शिनः शास्त्रज्ञस्य ॥ ९ ॥ वागीशः, वाक्पतिः, द्वे सार्थवक्तुः ॥ वाग्मी, वाचोयुक्तिपटुः, प्रवाक्, समुखः, वावदूकः, पञ्च सयुक्तिकस्य वक्तुः ॥ वद्रः, वक्ता, वदावदः, त्रयं वक्तुः ॥ १० ॥ जल्पाकः, कुत्सिता वाक् अस्य—वाचालः, वाचाटः, बहुगर्ह्यवाक्, चत्वारि वाचालस्य ॥ अवदः, अनुत्तरः,

१ 'प्रतिभामुखः' इत्यपि पाठः ।

## अथ मर्त्यकाण्डः ।

मर्त्यः पञ्चजनो भूस्पृक् पुरुषः पूरुषो नरः ।
मनुष्यो मानुषो ना विट् मनुजो मानवः पुमान् ॥ १ ॥
बालः पाकः शिशुर्डिम्भः पोतः शावः स्तनन्धयः ।
पृथुकार्भोत्तानशयाः क्षीरकण्ठः कुमारकः ॥ २ ॥
शिशुत्वं शैशवं बाल्यं वयःस्थस्तरुणो युवा ।
तारुण्यं यौवनं वृद्धः प्रवयाः स्थविरो जरन् ॥ ३ ॥
जरी जीर्णो यातयामो जीनोऽथ विस्रसा जरा ।
वार्द्धकं स्थाविरं ज्यायान् वर्षीयान्दशमीत्यपि ॥ ४ ॥
विद्वान् सुधीः कविविचक्षणलब्धवर्णो
ज्ञः प्राप्तरूपकृतिकृष्ट्यभिरूपधीराः ।
मेधाविकोविदविशारदसूरिदोष-
ज्ञाः प्राज्ञपण्डितमनीषिबुधप्रबुद्धाः ॥ ५ ॥

---

मर्त्य, पृथिव्यादिभि पञ्चभिर्भूतैर्जायते—पञ्चजन, भूस्पृक् भूस्पृशौ, पुरुष, पूरुष, नर, मनुष्य, मानुष, ना, विट् (पु०) विशौ विश, मनुज, मानव, पुमान्, त्रयोदश मनुष्यस्य ॥ १ ॥ बाल, पाक, शिशु, डिम्भ, पोत, शाव, स्तनन्धय, पृथुक, अर्भ, उत्तानशय, क्षीरकण्ठ, कुमारक, द्वादश शिशो ॥ २ ॥ शिशुत्वम्, शैशवम्, बाल्यम्, त्रय बाल्यस्य ॥ वय स्थ, तरुण, युवा, त्रीणि तरुणस्य ॥ तारुण्यम्, यौवनम् (पु० न० ), "यौवनिका" द्वे यौवनस्य ॥ वृद्ध, प्रवया, स्थविर, जरन्, ॥ ३ ॥ जरी, जीर्ण, यातयाम, जीन, अष्टौ वृद्धस्य ॥ विस्रसा, जरा, द्वे जराया ॥ वार्द्धकम्, स्थाविरम्, द्वय वृद्धत्वस्य ॥ ज्यायान्, वर्षीयान्, दशमी, "दशमीस्थ" त्रयम् अतिवृद्धस्य ॥ ४ ॥ विद्वान्, सुधी, कवि, विचक्षण, लब्धवर्ण, ज्ञ, प्राप्तरूप, कृती, कृष्टि, अभिरूप, धीर, मेधावी, कोविद, विशारद, सूरि, दोषज्ञ, प्राज्ञ, पण्डित, मनीषी,

मूढो मन्दो यथाजातो वालो मातृमुखो जडः ।
मूर्खोऽमेधोविवर्णाज्ञा वैधेयो मातृशासितः ॥ १६ ॥
देवानांप्रियजाल्मौ च दीर्घसूत्रश्चिरक्रियः ।
मन्दः क्रियासु कुण्ठः स्यात्क्रियावान्कर्मसूद्यतः॥१७॥
कर्मक्षमोऽलकर्माणः कर्मशूरस्तु कर्मठः ।
कर्मशीलः कार्मे आय' शूलिकस्तीक्ष्णकर्मकृत् ॥१८ ॥
सिंहसंहननः स्वङ्ग' स्वतन्त्रो निरवग्रह. ।
यथाकामी स्वरुचिश्च स्वच्छन्दः स्वैर्यपावृतः ॥ १९ ॥
यदृच्छा स्वैरिता स्वेच्छा नाथवान् निघ्नगृह्यकौ ।
तन्त्रायत्तवशाधीनच्छन्दवन्तः परात् परे ॥ २० ॥

---

बालिश , मूढ , मन्द , यथाजात , "यथोद्गत " बाल , माता एव मुख यस्य–मातृमुख , जड , मूर्ख अमेधा , विवर्ण , अज्ञ , वैधेय , मातृशासित , ॥ १६ ॥ देवानाप्रिय , जाल्म , पञ्चदश मूर्खस्य [ अनेड , नामवर्जित ] ॥ दीर्घसूत्र चिरक्रिय , द्वे अतिविलम्बेन क्रियाकारिण ॥ क्रियासु मन्द कुण्ठ , एक मन्दक्रियस्य ॥ कर्मसु उद्यत क्रियावान्, एक- सुयोगिन ॥ १७ ॥ कर्मक्षम , अलकर्माण , द्वे कर्मकरणे समर्थस्य ॥ कर्मशूर , कर्मठ , द्वय कर्मठस्य ॥ कर्मशील , कार्म , द्वे कर्मशीलस्य ॥ यो मृदुना उपायेन अन्वेष्टव्यानर्थान् तीक्ष्णोपायेन अन्वेष्टा स तीक्ष्णकर्मकृत् आय शूलिक , एक तीक्ष्णकर्मकर्तु ॥ १८ ॥ सिंहसहनन , स्वङ्ग , द्वे सौन्दर्य- युक्तस्य ॥ स्वतत्र , निरवग्रह , यथाकामी, स्वरुचि , स्वच्छन्द , स्वैरी, "स्वैर " अपावृत , सप्त स्वतन्त्रस्य ॥ १९ ॥ यदृच्छा, स्वैरिता, स्वेच्छा, त्रय स्वेच्छाया ॥ नाथवान्, निघ्न , गृह्यक , परशब्दात् तन्त्र–आयत्त–वश–अधीन–छन्द–वान् शब्दा प्रयोज्या । यथा—परतन्त्र , परायत्त , परवश , पराधीन , परच्छन्द , परवान्, नव पराधीनस्य ॥ २० ॥ लक्ष्मीवान्,

यद्वदोऽनुत्तरे दुर्वाक् कद्वदे स्यादथाधरः ॥ ११ ॥
हीनवादिन्येडमूकानेडमूकौ त्ववाक्श्रुतौ।
रवण शब्दनस्तुल्यौ कुवादकुचरौ समौ ॥ १२ ॥
लोहलोऽस्फुटवाग् मूकोऽवागसौम्यस्वरोऽस्वरः।
वेदिता विदुरो विन्दुर्वन्दारुस्त्वभिवादकः ॥ १३ ॥
आशसुराशंसितरि कद्वरस्त्वतिकुत्सितः ॥
निराकरिष्णुः क्षिप्नुः स्याद्विकासी तु विकस्वरः ॥१४॥
दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियवदः।
दानशीलः स वदान्यो वदन्योऽप्यथ बालिशः ॥१५॥

---

द्वे असबद्धभाषकस्य ॥ दुर्वाक्, कुत्सित वदति–कद्वद, द्वे सनिन्दभाषिण ॥ अधर, ॥ ११ ॥ हीनवादी, द्वे पराजितस्य वादिन ॥ एडमूक, अनेडमूक, "अनेड" अवाक्श्रुतिः, त्रय बधिरमूकस्य ॥ रवण, शब्दन, द्वे शब्दकरस्य ॥ कुवाद, कुचर, द्वे कुकथनाभिधायिन । कुटिलाशयस्येत्येके ॥ १२ ॥ लोहल, अस्फुटवाक्, द्वे अस्पष्टभाषिण [ काहल ] ॥ मूक, अवाक्, द्वे मूकस्य [ जड, कड ] ॥ असौम्यस्वर, अस्वर, द्वे काकादिवद्रूक्षस्वरस्य ॥ वेदिता, विदुर, विन्दु, त्रय ज्ञातु ॥ वन्दारु, अभिवादक, द्वे वन्दनशीलस्य ॥ १३ ॥ आशसु, आशसिता, द्वे इच्छाशीलस्य ॥ कद्वर "कद्वर" एकमति-कुत्सितस्य ॥ निराकरिष्णु, क्षिप्नु, "क्षिप्णु" द्वे निराकरण-शीलस्य ॥ विकासी, "विकाशी" विकस्वर, "विकश्वर" द्वे विकासशीलस्य ॥ १४ ॥ दुर्मुख, मुखर, अबद्धमुख, त्रीणि अप्रियभाषिण । अनर्गलमुखस्येत्यन्ये ॥ शक्ल, प्रियवदः, द्वे प्रियवादिन ॥ स प्रियवद दानशीलश्चेद् वदान्य, वदन्य, द्वे प्रियवादिदातु । दानशीलप्रियवदौ वदान्यौ पृथगित्यन्ये ॥ १५ ॥

---

१ 'अन्धो ह्यनेडमूक स्यात्' इति हलायुध ॥ 'अनेडमूकस्तु जड' इति वैजयन्ती ॥ "शठो ह्यनेडमूक स्यात्' इति भागुरि ॥

भर्मण्या भर्म भृत्या च भोगस्तु गणिकाभृतिः ।
खलपूः स्याद्बहुकरो भारवाहस्तु भारिकः ॥ २७ ॥
वार्तावहे वैवधिको भारे विवधवीवधौ ।
काचः शिक्यं तदालम्बो भारयष्टिर्विहङ्गिका ॥ २८ ॥
शूरश्चारभटो वीरो विक्रान्तश्चाथ कातरः ।
दरितश्चकितो भीतो भीरुभीरुकभीलुकाः ॥ २९ ॥
विहस्तव्याकुलौ व्यग्रे कान्दिशीको भयद्रुते ।
उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥ ३० ॥
महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशयाः ।
महामना महात्मा च कृपणस्तु मितपचः ॥ ३१ ॥

---

भर्म, भृत्या, द्वादश वेतनस्य ॥ भोग , एक गणिकाया वेतनस्य [भाटि ] ॥ खलपू , बहुकर , द्वे समार्जकस्य "झाडु म्हाढनार" इ० भा० । बहुधान्यार्जकस्येत्यन्ये ॥ भारवाह , भारिक , "भारी" द्वे भारवाहस्य ॥ २७ ॥ वार्तावह , वैवधिक , "विवधिक " द्वे वार्तावहस्य "मोदी" इ० भा० ॥ भार , विवध , वीवध , त्रय भारस्य ॥ तस्य भारस्य आलम्ब रज्जु-पञ्जरम् काच , शिक्यम् , द्वे शिक्यस्य "सीकु" इ० भा० ॥ भारयष्टि , विहङ्गिका, "विहङ्गमा" द्वे भारोद्वहनार्थचतुर्दण्डि-काया शिक्याधारस्य । शिक्याधारस्कन्धग्राह्यलगुडस्य इति द्रमिला ॥ २८ ॥ शूर , चारभट , वीर , विक्रान्त , चत्वारि शूरस्य ॥ कातर , दरित , चकित , भीत , भीरु ; भीरुक , भीलुक , सप्त भीरो [ त्रस्नु , त्रस्त ,-] ॥ २९ ॥ विहस्त , व्या-कुल , व्यग्र , त्रीणि शोकादिभि कर्तव्यतामूढस्य "गभराएलो" इ० भा० ॥ कान्दिशीक , भयद्रुत , द्वय भीत्या पलायितस्य ॥ उत्पिञ्जल , समुत्पिञ्ज , पिञ्जल , त्रीणि अत्यन्ताकुलस्य ॥ ३० ॥ महेच्छ , उद्भट , उदार , उदात्त , उदीर्ण , महाशय , महामना , महात्मा, अष्टौ उदारस्य ॥ कृपण , मितपच , ॥ ३१ ॥ कीनाश ,

लक्ष्मीवान् लक्ष्मणः श्लील इभ्य आढ्यो धनीश्वरः ।
ऋद्धे विभूतिः सपत्तिर्लक्ष्मीः श्रीऋद्धिसंपदः ॥ २१ ॥
दरिद्रो दुर्विधो दुःस्थो दुर्गतो निःस्वकीकटौ ।
अकिञ्चनोऽधिपस्त्वीशो नेता परिबृढोऽधिभूः ॥ २२ ॥
पतीन्द्रस्वामिनाथार्याः प्रभुर्भर्तेश्वरो विभुः ।
ईशितेनो नायकश्च नियोज्यः परिचारकः ॥ २३ ॥
डिङ्गरः किंकरो भृत्यश्चेटो गोप्यः पराचितः ।
दासः प्रेष्यः परिस्कन्दो भुजिष्यपरिकर्मिणौ ॥ २४ ॥
परान्नः परपिण्डादः परजातः परैधितः ।
भृतके भृतिभुग् वैतनिकः कर्मकरोऽपि च ॥ २५ ॥
स निर्भृति॰ कर्मकारो भृतिः स्यान्निष्क्रयः पणः ।
कर्मण्या वेतन मूल्य निर्वेशो भरण विधा ॥ २६ ॥

लक्ष्मण, श्लील, "श्रील, श्रीमान्" त्रय लक्ष्मीवत ॥ इभ्य, आढ्य, धनी, ईश्वर, ऋद्ध, पञ्च धनिन ॥ विभूति, सपत्ति, लक्ष्मी, श्री, ऋद्धि, सपद्, पद् सपद ॥ २१ ॥ दरिद्र, दुर्विध, दु स्थ, दु खेन गच्छति—दुर्गत, नि स्व, कीकट, अकिंचन, सप्त दरिद्रस्य [ क्षुद्र, दीन, नीच, ] ॥ अधिप, ईश, नेता, परिवृढ, अधिभू, ॥ २२ ॥ पति, इन्द्र, स्वामी, नाथ, अर्य, प्रभु, भर्ता, ईश्वर, विभु, ईशिता, इन, नायक, सप्तदश स्वामिन ॥ नियोज्य, परिचारक, "प्रतिचर" ॥ २३ ॥ डिङ्गर, किंकर, भृत्य, चेट, गोप्य, पराचित, दास, प्रेष्य, परिस्कन्द, भुजिष्य, परिकर्मी, ॥ २४ ॥ परान्न, परपिण्डाद, परजात, परैधित, सप्तदश किंकरस्य । तत्र परान्नादयश्चत्वार परान्नोपजीविन इत्यन्ये ॥ भृतक, भृतिभुग्, वैतनिक, कर्मकर, चत्वारि वेतनोपजीविन ॥ २५ ॥ य निर्भृति विना भृतिं कर्म करोति स कर्मकार, इत्येकम् ॥ भृति, निष्क्रय, पण, कर्मण्या, वेतनम्, मूल्यम्, निर्वेश, भरण, विधा, ॥ २६ ॥ कर्मण्या,

भर्मण्या भर्म भृत्या च भोगस्तु गणिकाभृतिः ।
खलपूः स्याद्बहुकरो भारवाहस्तु भारिकः ॥ २७ ॥
वार्तावहे वैवधिको भारे विवधवीवधौ ।
काचः शिक्यं तदालम्बो भारयष्टिर्विहङ्गिका ॥ २८ ॥
शूरश्चारभटो वीरो विक्रान्तश्चाथ कातरः ।
दरितश्चकितो भीतो भीरुभीरुकभीलुकाः ॥ २९ ॥
विहस्तव्याकुलौ व्यग्रे कान्दिशीको भयद्रुते ।
उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥ ३० ॥
महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशयाः ।
महामना महात्मा च कृपणस्तु मितपचः ॥ ३१ ॥

---

भर्म, भृत्या, द्वादश वेतनस्य ॥ भोग, एकं गणिकाया वेतनस्य [भाटि] ॥ खलपू, बहुकर, द्वे समार्जकस्य "झाडु कहाढनार" इ० भा० । बहुधान्यार्जकस्येत्यन्ये ॥ भारवाह, भारिक, "भारी" द्वे भारवाहस्य ॥ २७ ॥ वार्तावह, वैवधिक, "विवधिक" द्वे वार्तावहस्य "मोदी" इ० भा० ॥ भार, विवध, वीवध, त्रय भारस्य ॥ तस्य भारस्य आलम्ब रज्जु-पञ्जरम् काच, शिक्यम्, द्वे शिक्यस्य "सीकु" इ० भा० ॥ भारयष्टि, विहङ्गिका, "विहङ्गमा" द्वे भारोद्वहनार्थचतुर्दण्डिकाया शिक्याधारस्य । शिक्याधारस्कन्धग्राह्यलगुडस्य इति द्रमिला ॥ २८ ॥ शूर, चारभट, वीर, विक्रान्त, चत्वारि शूरस्य ॥ कातर, दरित, चकित, भीत, भीरु, भीरुक, भीलुक, सप्त भीरो [त्रस्नु, त्रस्त,] ॥ २९ ॥ विहस्त, व्याकुल, व्यग्र, त्रीणि शोकादिभि कर्तव्यतामूढस्य "गभराएलो" इ० भा० ॥ कान्दिशीक, भयद्रुत, द्वय भीत्या पलायितस्य ॥ उत्पिञ्जल, समुत्पिञ्ज, पिञ्जल, त्रीणि अत्यन्ताकुलस्य ॥ ३० ॥ महेच्छ, उद्भट, उदार, उदात्त, उदीर्ण, महाशय, महामना, महात्मा, अष्टौ उदारस्य ॥ कृपण, मितपच, ॥ ३१ ॥ कीनाश,

लक्ष्मीवान् लक्ष्मणः श्रील इभ्य आढ्यो धनीश्वरः ।
ऋद्धे विभूतिः सपत्तिर्लक्ष्मीः श्रीऋद्धिसपदः ॥ २१ ॥
दरिद्रो दुर्विधो दुःस्थो दुर्गतो निःस्वकीकटौ ।
अकिञ्चनोऽधिपस्त्वीशो नेता परिवृढोऽधिभूः ॥ २२ ॥
पतीन्द्रस्वामिनाथार्याः प्रभुर्भर्तेश्वरो विभुः ।
ईशितेनो नायकश्च नियोज्यः परिचारकः ॥ २३ ॥
डिङ्गरः किंकरो भृत्यश्चेटो गोप्यः पराचितः ।
दासः प्रेष्यः परिस्कन्दो भुजिष्यपरिकर्मिणौ ॥ २४ ॥
परान्नः परपिण्डादः परजातः परैधितः ।
भृतके भृतिभुग् वैतनिकः कर्मकरोऽपि च ॥ २५ ॥
स निर्भृतिः कर्मकारो भृतिः स्यान्निष्क्रयः पणः ।
कर्मण्या वेतन मूल्य निर्वेशो भरण विधा ॥ २६ ॥

लक्ष्मण, श्रील, "श्रील, श्रीमान्" त्रय लक्ष्मीवत ॥ इभ्य, आढ्य, धनी, ईश्वर, ऋद्ध, पञ्च धनिन ॥ विभूति, सपत्ति, लक्ष्मी, श्री, ऋद्धि, सपद्, पद् सपद् ॥ २१ ॥ दरिद्र, दुर्विध, दु स्थ, दु रेन गच्छति–दुर्गत, नि स्व, कीकट, अकिचन, सप्त दरिद्रस्य [ क्षुद्र, दीन, नीच, ] ॥ अधिप, ईश, नेता, परिवृढ, अधिभू, ॥ २२ ॥ पति, इन्द्र, स्वामी, नाथ, अर्य, प्रभु, भर्ता, ईश्वर, विभु, ईशिता, इन, नायक, सप्तदश स्वामिन ॥ नियोज्य, परिचारक, "प्रतिचर" ॥ २३ ॥ डिङ्गर, किंकर, भृत्य, चेट, गोप्य, पराचित, दास, प्रेष्य, परिस्कन्द, भुजिष्य, परिकर्मी, ॥ २४ ॥ परान्न, परपिण्डाद, परजात, परैधित, सप्तदश किंकरस्य । तत्र परान्नादयश्चत्वार परान्नोपजीविन इत्यन्ये ॥ भृतक, भृतिभुग्, वैतनिक, कर्मकर, चत्वारि वेतनोपजीविन ॥ २५ ॥ य निर्भृति विना भृतिं कर्म करोति स कर्मकार, इत्येकम् ॥ भृति, निष्क्रय, पण, कर्मण्या, वेतनम्, मूल्यम्, निर्वेश, भरण, विधा, ॥ २६ ॥ कर्मण्या,

**भर्मण्या भर्म भृत्या च भोगस्तु गणिकाभृतिः ।**
**खलपूः स्याद्बहुकरो भारवाहस्तु भारिकः ॥ २७ ॥**
**वार्तावहे वैवधिको भारे विवधवीवधौ ।**
**काचः शिक्य तदालम्बो भारयष्टिर्विहङ्गिका ॥ २८ ॥**
**शूरश्चारभटो वीरो विक्रान्तश्चाथ कातरः ।**
**दरितश्चकितो भीतो भीरुर्भीरुकभीलुकाः ॥ २९ ॥**
**विहस्तव्याकुलौ व्यग्रे कान्दिशीको भयद्रुते ।**
**उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥ ३० ॥**
**महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशयाः ।**
**महामना महात्मा च कृपणस्तु मितपचः ॥ ३१ ॥**

---

भर्म, भृत्या, द्वादश वेतनस्य ॥ भोग, एक गणिकाया वेतनस्य [भाटि] ॥ खलपू, बहुकर, द्वे समार्जकस्य "झाडु कहाढनार" इ० भा० । बहुधान्यार्जकस्येत्यन्ये ॥ भारवाह, भारिक, "भारी" द्वे भारवाहस्य ॥ २७ ॥ वार्तावह, वैवधिक, "विवधिक" द्वे वार्तावहस्य "भोदी" इ० भा० ॥ भार, विवध, वीवध, त्रय भारस्य ॥ तस्य भारस्य आलम्ब रज्जुपञ्जरम् काच, शिक्यम्, द्वे शिक्यस्य "सीकु" इ० भा० ॥ भारयष्टि, विहङ्गिका, "विहङ्गमा" द्वे भारोद्वहनार्थचतुर्दण्डिकाया शिक्याधारस्य । शिक्याधारस्कन्धग्राह्यलगुडस्य इति द्रमिला ॥ २८ ॥ शूर, चारभट, वीर, विक्रान्त, चत्वारि शूरस्य ॥ कातर, दरित, चकित, भीत, भीरु, भीरुक, भीलुक, सप्त भीरो [त्रस्नु, त्रस्त,] ॥ २९ ॥ विहस्त, व्याकुल, व्यग्र, त्रीणि शोकादिभि कर्तव्यतामूढस्य "गभराएलो" इ० भा० ॥ कान्दिशीक, भयद्रुत, द्वय भीत्या पलायितस्य ॥ उत्पिञ्जल, समुत्पिञ्ज, पिञ्जल, त्रीणि अत्यन्ताकुलस्य ॥ ३० ॥ महेच्छ, उद्भट, उदार, उदात्त, उदीर्ण, महाशय, महामना, महात्मा, अष्टौ उदारस्य ॥ कृपण, मितपच, ॥ ३१ ॥ कीनाश,

कीनाशस्तद्धनः क्षुद्रकदर्यदृढमुष्टयः ।
किंपचानो दयालुस्तु कृपालुः करुणापरः ॥ ३२ ॥
सूरतोऽथ दया शूकः कारुण्यं करुणा घृणा ।
कृपाऽनुकम्पाऽनुक्रोशो हिंस्रे शरारुघातुकौ ॥ ३३ ॥
व्यापादनं विशरणं प्रमयः प्रमापणं
निर्ग्रन्थनं प्रमथनं कदनं निबर्हणम् ।
निस्तर्हणं विशसनं क्षणनं परासनं
प्रोज्जासनं प्रशमनं प्रतिघातनं वधः ॥ ३४ ॥
प्रवासनोद्वासनघातनिर्वा-
सनानि संज्ञप्तिनिशुम्भहिंसाः ।
निर्वापणालम्भनिसूदनानि
निर्यातनोन्मन्थसमापनानि ॥ ३५ ॥
अपासनं वर्जनमारपिञ्जा
निष्कारणक्राथविशारणानि ।

---

तद्धन , क्षुद्र , कदर्य , दृढमुष्टि , किंपचान , अष्टौ कृपणस्य ॥ दयालु , कृपालु , करुणापर , ॥ ३२ ॥ सुष्ठु रमते कृपाया-सूरत , चत्वारि दयालो ॥ दया, शूक (पु० न० ), कारुण्यम्, करुणा, घृणा, कृपा, अनुकम्पा, अनुक्रोश , अष्टौ दयाया ॥ हिंस्र , शरारु , घातुक , त्रीणि घातुकस्य ॥ ३३ ॥ व्यापादनम्, विशरणम्, प्रमय (पु० न० ), प्रमापणम्, "प्रमापनम्" निर्ग्रन्थनम् "निर्ग्रथनम्" प्रमथनम्, कदनम्, निबर्हणम् "निर्वर्हणम्" निस्तर्हणम्, विशसनम्, क्षणनम्, परासनम्, प्रोज्जासनम्, प्रशमनम्, प्रतिघातनम्, वध , ॥ ३४ ॥ प्रवासनम्, उद्वासनम्, घात , निर्वासनम्, संज्ञप्ति , निशुम्भ , हिंसा, निर्वापणम्, आलम्भ , निसूदनम्, "निषूदनम्" निर्यातनम्, उन्मन्थ , "उन्माथ" समापनम्, ॥ ३५ ॥ अपासनम्, वर्जनम्, मार , पिञ्ज , निष्कारणम्, क्राथ , विशारणम्, पट्-

स्युः कर्तने कल्पनवर्धने च
छेदश्च घातोद्यत आततायी ॥ ३६ ॥
स शैर्षच्छेदिकः शीर्षच्छेद्यो यो वधमर्हति ।
प्रमीत उपसपन्नः परेतप्रेतसंस्थिताः ॥ ३७ ॥
नामालेख्ययशःशेपो व्यापन्नोपगतौ मृतः ।
परासुस्तदहे दानं तदर्थमौर्ध्वदेहिकम् ॥ ३८ ॥
मृतस्नानमपस्नान निवापः पितृतर्पणम् ॥
चितिचित्याचितास्तुल्या ऋजुस्तु प्राञ्जलोञ्जसः ॥३९॥
दक्षिणे सरलोदारौ शठस्तु निकृतोऽनृजुः ।
क्रूरे नृशंसनिस्त्रिंशपापा धूर्तस्तु वञ्चकः ॥ ४० ॥
व्यसकः कुहको दाण्डाजिनिको मायिजालिकौ ।

---

त्रिंशत् मारणस्य ॥ कर्तनम्, कल्पनम्, वर्धनम्, छेद, चत्वारि कर्तनस्य "कापवु" इ० भा० ॥ आततायी, एक घात कर्तुमुद्यतस्य । यदुक्त स्मृतौ—"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापह । क्षेत्रदारहरश्चैव पडेते आततायिन " ॥ १ ॥ ३६ ॥ शैर्षच्छेदिक, शीर्षच्छेद्य, द्वे वधार्हस्य ॥ प्रमीत, उपसपन्न, परेत, प्रेत, सस्थित, ॥ ३७ ॥ नाम—आलेख्य—यश शब्देभ्य पर शेपो यथा—नामशेप, आलेख्यशेप, यश शेप, व्यापन्न, उपगत, मृत, परासु, द्वादश मृतस्य ॥ तदहे तस्य मृतस्य अहनि मृतमुद्दिश्य पिण्डोदकादि यद्दान तत् और्ध्वदेहिकम्, "और्ध्वदैहिकम्" एक मृतमुद्दिश्य दानस्य ॥ ३८ ॥ मृतस्नानम्, अपस्नानम्, द्वे मृतमुद्दिश्य स्नानस्य ॥ निवाप, पितृतर्पणम्, द्वे पितृतर्पणस्य ॥ चिति, चित्या, चिता, त्रय चितायाः ॥ ऋजु, प्राञ्जल, अञ्जस, त्रयम् ऋजो ॥ ३९ ॥ दक्षिण, सरल, उदार, त्रय सरलस्य ॥ शठ, "शण्ठ" निकृत, अनृजु, त्रय शठस्य ॥ क्रूर, नॄन् शसति हिनस्ति—नृशस, निस्त्रिंश खड्ग तद्वत् घातुकत्वात्—निस्त्रिंश, पाप, चत्वारि क्रूरस्य ॥ धूर्त, वञ्चक, ॥ ४० ॥ व्यसक, कुहक, दण्डाजि-

**माया तु शठता शाठ्य कुसृतिर्निकृतिश्च सा ॥ ४१ ।**
**कपट कैतवं दम्भ' कूट छद्मोपधिश्छलम् ।**
**व्यपदेशो मिष लक्ष निभ व्याजोऽथ कुकुटिः ॥४२॥**
**कुहना दम्भचर्या च वञ्चन तु प्रतारणम् ।**
**व्यलीकमतिसधानं साधौ सभ्यार्यसज्जनाः ॥ ४३ ॥**
**दोषैकदृग् पुरोभागी कर्णेजपस्तु दुर्जनः ।**
**पिशुनः सूचको नीचो द्विजिह्वो मत्सरी खलः ॥४४॥**
**व्यसनार्तस्तूपरक्तश्चोरस्तु प्रतिरोधकः ।**
**दस्युः पाटच्चर. स्तेनस्तस्करः पारिपन्थिकः ॥ ४५ ॥**
**परिमोषिपरास्कन्दैकागारिकमलिम्लुचाः ।**

नेन दम्भेन अन्वेष्टा–दाण्डाजिनिक , मायी, "मायावी, मायिक " जालिक , सप्त धूर्तस्य ॥ माया, शठता, शाठ्यम्, कुसृति , निकृति , पञ्च शाठ्यस्य ॥ ४१ ॥ कपटम् (पु० न०), कैतवम्, दम्भ , कूट (पु० न०), छद्म, उपधि (पु०), "उपधा" छलम्, व्यपदेश , मिषम्, लक्षम् (पु० न०), निभम्, व्याज , द्वादश कपटस्य ॥ अत्र मायादयो व्याजान्ता एकार्था इत्येके । कपटादय व्यपदेशादयश्च भिन्नार्था इत्यन्ये ॥ कुकुटि , ॥ ४२ ॥ कुहना, दम्भचर्या, त्रय दम्भेन परविस्मापनार्थं मिथ्याकल्पनाया ॥ वञ्चनम्, प्रतारणम्, "प्रतारणा" व्यलीकम्, अतिसधानम्, चत्वारि वञ्चनस्य "ठगाइ" इ० भा० ॥ साधु , सभ्य , आर्य , सज्जन , चत्वारि सज्जनस्य ॥ ४३ ॥ दोषैकदृग् , पुरोभागी, द्वे दोषमात्रपश्यत ॥ कर्णेजप , दुर्जन , पिशुन , सूचक , नीच , द्विजिह्व , मत्सरी, खल (पु० न० ), वाच्यलिङ्गोयमित्यन्ये । अष्टौ पिशुनस्य [ क्षुद्र , प्रखल ] चाटीयो इति भा० ॥ ४४ ॥ व्यसनार्त , उपरक्त , द्वे व्यसनिन ॥ चोर , "चौर " प्रतिरोधक , दस्यु , पाटच्चर , "पटच्चर " स्तेन (पु० न०), तस्कर , पारिपन्थिक , ॥ ४५ ॥ परिमोषी, परास्कन्दी, एकम् असहायम् अगार प्रयोजनमस्य–ऐकागारिक ,

वर्षं वर्षधरायङ्कं विषयस्तूपवर्तनम् ।
देशो जनपदो नीवृद् राष्ट्रं निर्गश्च मण्डलम् ॥ १३ ॥
आर्यावर्तो जन्मभूमिर्जिनचक्र्यर्द्धचक्रिणाम् ।
पुण्यभूराचारवेदी मध्यं विन्ध्यहिमागयोः ॥ १४ ॥
गङ्गायमुनयोर्मध्यमन्तर्वेदिः समस्थली ।
ब्रह्मावर्तः सरस्वत्या दृषद्वत्याश्च मध्यतः ॥ १५ ॥
ब्रह्मवेदिः कुरुक्षेत्रे पञ्चराम ह्रदान्तरम् ।
धर्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि ॥ १६ ॥
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः स मध्यमः ॥ १७ ॥
देशः प्राग् दक्षिणः प्राच्यो नदी यावच्छरावतीम् ।
पश्चिमोत्तरस्तूदीच्यः प्रत्यन्तो म्लेच्छमण्डलः ॥१८॥

---

वर्षम् (पु० न०), वर्षधराद्यङ्कम्, द्वे वर्षस्य ॥ विषय, उपवर्तनम्, देश, जनपद, "जानपद" नीवृत् (पु० स्त्री०), राजति–राष्ट्रम् (पु० न०), निर्ग, मण्डलम् (त्रि०), अष्टौ देशस्य ॥ १३ ॥ जिनचक्र्यर्द्धचक्रिणा जन्मभूमि विन्ध्यहिमालययोर्मध्य च आर्यावर्त, पुण्यभू आचारवेदी (स्त्री०), त्रीणि आर्यावर्तस्य ॥ १४ ॥ अन्तर्वेदि (स्त्री०), समस्थली, द्वे गङ्गायमुनयोर्मध्यप्रदेशस्य ॥ ब्रह्मावर्त, एक सरस्वतीदृषद्वत्योर्मध्यप्रदेशस्य ॥१५॥ ब्रह्मवेदि, एक कुरुक्षेत्रे पञ्चरामह्रदमध्यप्रदेशस्य ॥ धर्मक्षेत्रम्, कुरुक्षेत्रम्, द्वे द्वादशयोजनप्रमाणस्य कुरुक्षेत्रस्य ॥ १६ ॥ हिमवद्विन्ध्ययो यत् मध्यम्, विनशनात् सरस्वत्या अन्तर्धानदेशात् प्राक्, प्रयागात् प्रत्यक्, स मध्यदेश, मध्यम, द्वे मध्यदेशस्य ॥ १७ ॥ शरावतीं नदीं यावत् प्राग्दक्षिण देश प्राच्य, एक शरावतीनद्या पूर्वदक्षिणदेशस्य ॥ उदीच्य, एक शरावत्या पश्चिमोत्तरदेशस्य ॥ प्रत्यन्त, म्लेच्छमण्डल, द्वे शिष्टाचाररहित-

**पाण्डूदक्कृष्णतो भूमः पाण्डूदक्कृष्णमृत्तिके ।**
**जङ्गलो निर्जलोऽनूपोऽम्बुमान् कच्छस्तु तद्विधः॥१९॥**
**कुमुद्वान् कुमुदावासो वेतस्वान् भूरिवेतसः ।**
**नडप्रायो नडकीयो नड्वाश्च नड्वलश्च सः ॥ २० ॥**
**शाद्वलः शादहरिते देशो नद्यम्बुजीवनः ।**
**स्यान्नदीमातृको देवमातृको वृष्टिजीवनः ॥ २१ ॥**
**प्राग्ज्योतिषाः कामरूपा मालवाः स्युरवन्तयः ।**
**त्रैपुरास्तु डाहलाः स्युश्चैद्यास्ते चेदयश्च ते ॥ २२ ॥**
**वङ्गास्तु हरिकेलीया अङ्गाश्चम्पोपलक्षिताः ।**

---

देशस्य ॥ १८ ॥ पाण्डु-उदक् कृष्ण-शब्देभ्य परौ भूम-मृत्तिका-शब्दौ प्रयोज्यौ । यथा—पाण्डुभूम , पाण्डुमृत्तिक , द्वे पाण्डुमृत्तिकाप्रदेशस्य ॥ उदग्भूम , उदङ्मृत्तिक , द्वे उदङ्मृत्तिकाप्रदेशस्य ॥ कृष्णभूम , कृष्णमृत्तिक , द्वे कृष्णमृत्तिकाप्रदेशस्य ॥ जङ्गल , "जाङ्गल" निर्जल , द्वे निर्जलप्रदेशस्य ॥ अनूप , अम्बुमान् , द्वे जलमयप्रदेशस्य ॥ कच्छ (पु० न०), एकं अनूपप्रायस्य नद्यादे उपान्तदेशस्य । अनूपपर्याय इत्यन्ये ॥ १९ ॥ कुमुद्वान् , कुमुदावास , द्वे कमलप्रायदेशस्य ॥ वेतस्वान् , एकं बहुलवेतसप्रदेशस्य ॥ नडप्राय , नडकीय , नड्वान् , नड्वल , चत्वारि नडप्रायप्रदेशस्य ॥ २० ॥ शादे बालतृणे हरिते देशे शाद्वल , "शाड्वल" एकं बालतृणयुक्तप्रदेशस्य ॥ नद्यम्बुजीवन देश नदीमातृक , एकं नदीनीरनिष्पन्नसस्यदेशस्य ॥ देवमातृक , एकं वृष्टिनिष्पन्नसस्यदेशस्य ॥२१॥ देशविशेषनामानि बहुवचनान्तानि भवन्ति । प्राग्ज्योतिषा , कामरूपा , द्वे कामरूपदेशस्य "आसाम" इति आधुनिका ॥ मालवा , अवन्तय (पु० न०), द्वे मालवदेशस्य ॥ त्रैपुरा , डाहला , चैद्या , चेदय , चत्वारि चेदिदेशस्य "पूर्वहिंदुस्तान" इति आधुनिका ॥ २२ ॥ वङ्गा हरिकेलीया , द्वे वङ्गदेशस्य "बंगाला" इ० भा० ॥ चम्पानगर्या उपलक्षिता अङ्गा , एकम् अङ्गदेशस्य

साल्वास्तु कारकुक्षीया मरवस्तु दशेरकाः ॥ २३ ॥
जालन्धरास्त्रिगर्ताः स्युस्तायिकास्तर्जिकाभिधाः ।
कश्मीरास्तु माधुमताः सारस्वता विकर्णिकाः ॥२४॥
वाहीकाष्टक्कनामानो वाल्हीका वाल्हिकाह्वयाः ।
तुरुष्कास्तु सारवयः स्युः कारूपास्तु बृहद्गृहाः ॥ २५ ॥
लम्पाकास्तु मुरुण्डाः स्युः सौवीरास्तु कुमालकाः ।
प्रत्यग्रथास्त्वहिच्छत्राः कीकटा मगधाह्वयाः ॥ २६ ॥
ओण्ड्राः केरलपर्यायाः कुन्तला उपहालकाः ।
ग्रामस्तु वसथः सनिप्रतिपर्युपतः पर ॥ २७ ॥

---

"बीहार" इ० भा० ॥ साल्वा, कारकुक्षीया, द्वे साल्वानाम् ॥ मरव, दशेरका, द्वे मरुदेशस्य "मारवाड" इ० भा० ॥ २३ ॥ जालन्धरा, त्रिगर्ता, द्वे त्रिगर्तदेशस्य "पजाबनो दक्षिणभाग" इ० भा० ॥ तायिका, तर्जिका, द्वे तायिकदेशस्य ॥ कश्मीरा, माधुमता, सारस्वता, विकर्णिका, चत्वारि कश्मीरदेशस्य ॥ २४ ॥ वाहीका, टक्का, द्वे वाहीकदेशस्य ॥ वाल्हीका, वाल्हिका, द्वे वाल्हीकदेशस्य "अरबस्तान" इ० भा० ॥ तुरुष्का, सारवय, द्वे तुरुष्कदेशस्य "तुर्कस्थान" इ० भा० ॥ कारूपा, बृहद्गृहा, द्वे कारूपदेशस्य ॥ २५ ॥ लम्पाका, मुरुण्डा, द्वे लम्पाकदेशस्य ॥ सौवीरा, कुमालका, द्वे सौवीरदेशस्य "सूरत" इ० भा० ॥ प्रत्यग्रथा, अहिच्छत्राः, द्वे अहिच्छत्रदेशस्य ॥ कीकटा, मगधा, द्वे मगधदेशस्य "बहारप्रांत" इ० भा० ॥ २६ ॥ ओण्ड्रा, केरला, द्वे ओण्ड्रदेशस्य "ओरिसा" इ० भा० "मलबार" इति केचित् ॥ कुन्तला, उपहालका, द्वे कुन्तलदेशस्य "कलबुर्गा" इ० भा० ॥ सम् नि-प्रति-परि-उपशब्देभ्य पर वसथशब्द प्रयोज्य । यथा—संवसथ, निवसथ, प्रतिव-

पाटकस्तु तदर्द्धे स्यादाघाटस्तु घटोऽवधिः ।
अन्तोऽवसान सीमा च मर्यादाऽपि च सीमनि ॥२८॥
ग्रामसीमा तूपशल्य माल ग्रामान्तराटवी ।
पर्यन्तभूः परिसरः स्यात्कर्मान्तस्तु कर्मभूः ॥ २९ ॥
गोस्थानं गोष्ठमेतत्तु गौष्ठीन भूतपूर्वकम् ।
तदाशितंगवीन स्याद् गावो यत्राशिताः पुरा ॥ ३० ॥
क्षेत्रे तु वप्रः केदारः सेतौ पाल्यालिसवराः ।
क्षेत्र तु शाकस्य शाकशाकट शाकशाकिनम् ॥ ३१ ॥
व्रैहेय शालेय षष्टिक्य कौद्रवीणमौद्गीने ।

---

सथ , परिवसथ , उपवसथ , षट् ग्रामस्य ॥ २७ ॥ पाटक , एक ग्रामार्धस्य ॥ आघाट , घट , अवधि (पु० ), अन्त , अवसानम् , सीमा-सीमे, मर्यादा, सीमा-सीमानौ, अष्टौ सीमाया "हद" इ० भा० ॥ २८ ॥ उपशल्यम् , एक ग्रामसीमाया ॥ मालम् , "मालक (पु० न० )" एक ग्रामान्तरालाटव्या ॥ पर्यन्तभू , परिसर , द्वे ग्रामप्रान्तभुव "सीमाडो" इ० भा० ॥ कर्मान्त , कर्मभू , द्वे कर्षितभूमे "खेडेली भोंय" इ० भा० ॥ २९ ॥ गोस्थानम् , गोष्टम् ( पु० न० ), द्वे गवा स्थानस्य ॥ गौष्ठीनम् , एक भूतपूर्वगोष्टस्य ॥ यत्र पुरा पूर्व गाव आशिता तत् आशितङ्गवीनम् , एकम् "गायो चरीने तृप्त थएल छे एवु स्थान" इ० भा० ॥ ३० ॥ क्षेत्रम् , वप्र (पु० न० ), केदार (पु० न०), त्रीणि क्षेत्रस्य "खेतर" इ० भा० ॥ सेतु (पु०), पालि (स्त्री०), आलि (स्त्री०), सवर , चत्वारि सेतो "पाल" इ० भा० ॥ शाकस्य क्षेत्रम्–शाकशकटम् , शाकशाकिनम् , द्वे शाकक्षेत्रस्य । एवम् अग्रेऽपि व्रैहेयादौ बोध्यम् ॥ ३१ ॥ व्रैहेयम् , एक व्रीहिक्षेत्रस्य ॥ शालेयम् , एक शालिक्षेत्रस्य ॥ षष्टिक्यम् , एक षष्टिकक्षेत्रस्य ॥ कौद्रवीणम् , एकम् कोद्रवक्षेत्रस्य ॥ मौद्गीनम् ,

व्रीह्यादीनां क्षेत्रेऽणव्य तु स्यादाणवीनमणोः ॥ ३२ ॥
भङ्ग्यं भाङ्गीनमौमीनमुम्य यव्य यवक्यवत् ।
तिल्य तैलीनं मापीण माष्यं भङ्गादिसम्भवम् ॥३३॥
सील्यं हल्यं त्रिहल्य तु त्रिसील्य त्रिगुणाकृतम् ।
तृतीयाकृतं द्विहल्याद्येव शम्बाकृत च तत् ॥ ३४ ॥
बीजाकृत तूप्तकृष्ट द्रौणिकाढकिकादयः ।
स्युर्द्रोणाढकवापादौ खलधान पुनः खलम् ॥ ३५ ॥
चूर्णे क्षोदोऽथ रजसि स्युर्धूलीपांशुरेणवः ।
लोष्टे लोष्टुर्दलिलेष्टुर्वल्मीक' कृमिपर्वतः ॥ ३६ ॥

एक मुद्गक्षेत्रस्य ॥ अणव्यम्, आणवीनम्, द्वे अणुक्षेत्रस्य "कागनु खेतर" इ० भा० ॥ ३२ ॥ भङ्ग्यम्, भाङ्गीनम्, द्वे सणक्षेत्रस्य ॥ औमीनम्, उम्यम्, द्वे अलसीक्षेत्रस्य ॥ यव्यम्, यवक्यम्, द्वे यवक्षेत्रस्य ॥ तिल्यम्, तैलीनम्, द्वे तिलक्षेत्रस्य ॥ माषीणम्, माष्यम्, द्वे माषक्षेत्रस्य ॥३३॥ सीतया सगतम्—सील्यम्, हल्यम्, द्वे हलकृष्टस्य—क्षेत्रस्य ॥ त्रिहल्यम्, त्रिसील्यम्, त्रिगुणाकृतम्, तृतीयाकृतम्, चत्वारि त्रिवारकृष्टस्य क्षेत्रस्य ॥ द्विहल्यम्, द्विसील्यम्, द्विगुणाकृतम्, द्वितीयाकृतम्, शम्बाकृतम्, "सम्बाकृतम्" पञ्च द्विवारकृष्टस्य क्षेत्रस्य ॥३४॥ बीजाकृतम्, उप्तकृष्टम्, द्वे बीजम् उप्त्वा कृष्टक्षेत्रस्य "धान्यवावीने पछी खेडेल खेतर" इ० भा० ॥ द्रौणिक, आढकिक, खारीक, प्रास्थिक, पञ्चाना द्रोणादिपरिमितव्रीह्यादिवपनयोग्यक्षेत्राणामेकैकम् ॥ आदिशब्द द्रोणादि पचति सभवति अवहरति—द्रौणिक कटाह इत्याद्यर्थ ॥ खलधानम्, खलम् (नि०), द्वे खलस्य "खलु" इ० भा० ॥ ३५ ॥ चूर्णम् (पु० न०), क्षोद, द्वे पिष्टस्य ॥ रज (न०), धूली (स्त्री०), "धुलि" पांशु (पु०), "पासु" रेणु (पु० स्त्री०), चत्वारि धूल्या ॥ लोष्ट (पु० न०), "लोष्ठ" लोष्टु (पु०), दलि

१ "शम्बशब्द प्रतिलोम। अनुलोम कृष्ट क्षेत्र पुन प्रतिलोम कर्षति शम्बा करोति" इति सिद्धान्तकौमुद्याम् ॥

वम्रीकूट वामलूरो नाकुः शक्रशिरश्च सः ।
नगरी पू पुरी द्रङ्गः पत्तनं पुटभेदनम् ॥ ३७ ॥
निवेशनमधिष्ठानं स्थानीय निगमोऽपि च ।
शाखापुर तूपपुर खेटः पुरार्द्धविस्तरः ॥ ३८ ॥
स्कन्धावारो राजधानी कोट्टदुर्गे पुनः समे ।
गया पूर्गयराजर्षेः कन्यकुब्जं महोदयम् ॥ ३९ ॥
कन्याकुब्ज गाधिपुर कौशं कुशस्थलं च तत् ।
काशिर्वराणसी वाराणसी शिवपुरी च सा ॥ ४० ॥

---

(स्त्री० ), लेष्टु (पु० ), चत्वारि लोष्टस्य "ढेफु" इ० भा० ॥ वल्मीक (पु० न० ), कृमिपर्वत, ॥ ३६ ॥ वम्रीकूटम्, वामलूर, नाकु (पु० ), शक्रशिर (न० ), पट् वल्मीकस्य "राफडो" इ० भा० ॥ नगरी (स्त्री० न० ), पू (स्त्री० ), पुरी (त्रि० ), "पुरि" द्रङ्ग, पत्तनम्, "पट्टनम्" पुटभेदनम्, ॥ ३७ ॥ निवेशनम्, अधिष्ठानम्, स्थानीयम्, निगम, दश नगरस्य ॥ शाखापुरम्, उपपुरम्, द्वे शाखापुरस्य "परु" इ० भा० ॥ खेट (पु० न० ), पुरार्धविस्तर, द्वे कुत्सितग्रामस्य "गामडु" इ० भा० ॥३८॥ स्कन्धावार, राजधानी (स्त्री०न०), द्वे राजधान्या [ प्रधाननगरी, कटकम् ] ॥ कोट्ट (पु० न० ), दुर्गम्, द्वे कोट्टस्य "गढ" इ० भा० ॥ गया, एकं गयराजर्षेर्नगरस्य ॥ कन्यकुब्जम् (स्त्री० न० ), महोदयम् (स्त्री० न० ), ॥ ३९ ॥ कन्यकुब्जम् (स्त्री०न० ), गाधिपुरम्, कौशम्, कुशस्थलम्, पट् कन्यकुब्जस्य "कनोज" इ० भा० ॥ काशि (स्त्री० ) वराणसी, वाराणसी, शिवपुरी, चत्वारि काश्या ॥४०॥

---

१ "प्रधाननगरी राज्ञः राजधानीति कथ्यते" इति शब्दार्णव ।
२ "कटक वलये सानौ राजधानीनितम्बयो" इति वैजयन्ती ।

**साकेतं कोसलाऽयोध्या विदेहा मिथिला समे।**
**त्रिपुरी चेदिनगरी कौशाम्बी वत्सपत्तनम् ॥ ४१ ॥**
**उज्जयनी स्याद्विशालाऽवन्ती पुष्पकरण्डिनी।**
**पाटलिपुत्रं कुसुमपुरं चम्पा तु मालिनी ॥ ४२ ॥**
**लोमपादकर्णयोः पूर्देवीकोट उमावनम्।**
**कोटिवर्षं बाणपुरं स्याच्छोणितपुरं च तत् ॥ ४३ ॥**
**मथुरा तु मधूपघ्नं मधुराऽथ गजाह्वयम्।**
**स्याद् हास्तिनपुरं हस्तिनीपुरं हस्तिनापुरम् ॥ ४४ ॥**
**तामलिप्तं दामलिप्तं तामलिप्ती तमालिनी।**
**स्तम्बपूर्विष्णुगृहं च स्याद्विदर्भा तु कुण्डिनम् ॥ ४५ ॥**
**द्वारवती द्वारका स्यान्निषधा तु नलस्य पूः।**

---

साकेतम्, कोसला, अयोध्या, त्रीणि अयोध्यायाः ॥ विदेहा, मिथिला, द्वे मिथिलायाः ॥ त्रिपुरी, चेदिनगरी, द्वे त्रिपुर्याः ॥ कौशाम्बी, वत्सपत्तनम्, द्वे कौशाम्ब्याः ॥ ४१ ॥ उज्जयनी, विशाला, अवन्ती, पुष्पकरण्डिनी, चत्वारि उज्जयन्याः ॥ पाटलिपुत्रम्, कुसुमपुरम्, द्वे पाटलिपुत्रस्य "पटना" इ० भा० ॥ चम्पा, मालिनी, ॥ ४२ ॥ लोमपाद कर्णशब्दाभ्याम् पर पूःशब्द। यथा–लोमपादपुरी, कर्णपुरी, चत्वारि चम्पानगर्याः "भागलपुर" इ० भा० ॥ देवीकोट, उमावनम्, कोटिवर्षम्, बाणपुरम्, शोणितपुरम्, पञ्च देवीकोटस्य ॥ ४३ ॥ मथुरा, मधूपघ्नम्, मधुरा, त्रीणि मथुरायाः ॥ गजाह्वयम्, हास्तिनपुरम्, हस्तिनीपुरम्, हस्तिनापुरम्, चत्वारि हस्तिनापुरस्य "दिल्ली" इ० भा० ॥४४॥ तामलिप्तम्, दामलिप्तम्, तामलिप्ती, तमालिनी, स्तम्बपूः, विष्णुगृहम्, षट् तामलिप्तनगरस्य ॥ विदर्भा, कुण्डिनम्, "कुण्डिनपुरम्, कुण्डिनापुरम्" द्वे विदर्भानगर्याः ॥ ४५ ॥ द्वारवती, द्वारका, द्वे द्वारकायाः ॥ निषधा, एक नलराजधान्याः ॥ प्राकार,

प्राकारो वरणः सालं चयो वप्रोऽस्य पीठभूः ॥ ४६ ॥
प्राकाराग्रं कपिशीर्षं क्षौमाट्टाट्टालकाः समाः ।
पूर्द्वारे गोपुरं रथ्याप्रतोलीविशिखाः समाः ॥ ४७ ॥
परिकूटं हस्तिनखो नगरद्वारकूटके ।
सुखं निःसरणे वाटे प्राचीनावेष्टकौ वृतिः ॥ ४८ ॥
पदव्येकपदी पद्या पद्धतिर्वर्त्म वर्तनी ।
अयनं सरणिर्मार्गोऽध्वा पन्था निगमः सृतिः ॥४९॥
सत्पथे स्वतितः पन्था अपन्था अपथं समे ।
व्यध्वो दुरध्वः कदध्वा विपथं कापथं च सः ॥५०॥

---

वरण , साल , त्रीणि प्राकारस्य "भूमिगढ" इ० भा० ॥ अस्य प्राकारस्य पीठभू मूलभूमि चय , वप्र (पु० न०), द्वे प्राकारस्य मूलभूमेः ॥ ४६ ॥ प्राकाराग्रम् , कपिशीर्षम् , द्वे प्राकाराग्रस्य ॥ क्षौमम् (पु० न० ), अट्ट (पु० न० ), अट्टालक , त्रीणि प्राकाराग्रे रणगृहस्य ॥ पूर्द्वारम् , गोपुरम् , द्वे गोपुरस्य "शहेरनो दरवाजो" इ० भा० ॥ रथ्या, प्रतोली, विशिखा, त्रीणि रथ्यायाः "पोळ" इ० भा० ॥४७॥ परिकूटम् , हस्तिनख , नगरद्वारकूट , त्रीणि नगरद्वारे सुखेनावतरणार्थक्रमनिम्नस्य मृत्कूटस्य ॥ सुखम् , निःसरणम् , द्वे निर्गमनागमनमार्गस्य ॥ वाट (त्रि०), प्राचीनम् , आवेष्टक , वृति (स्त्री० ), चत्वारि कण्टकादिनिर्मितवाटस्य "वाड" इ० भा० ॥ ४८ ॥ पदवी, "पदवि " एकपदी, पद्या, पादाभ्याम् हन्यते–पद्धति , "पद्धती," वर्त्म, वर्तनी, "वर्तनि , वर्त्मनि " अयनम् , सरणि (स्त्री०), "सरणी, शरणि " मार्ग , अध्वा, पन्था , "पथ " निगम , सृति , त्रयोदश मार्गस्य ॥४९॥ सत्पथ , सु-अतिशब्दाभ्याम् पर पथिन् शब्द प्रयोज्य । यथा– सुपन्था , अतिपन्था , त्रीणि शोभनमार्गस्य ॥ अपन्था , अपथम् , द्वे अमार्गस्य ॥ व्यध्व , दुरध्व , कदध्वा, विपथम् ( पु० न० ),

प्रान्तरं दूरशून्योऽध्वा कान्तारो वर्त्म दुर्गमम् ।
सुरङ्गा तु सन्धिला स्याद्गूढमार्गो भुवोऽन्तरे ॥५१॥
चतुष्पथे तु संस्थानं चतुष्कं त्रिपथे त्रिकम् ।
द्विपथं तु चारपथो गजाद्यध्वा त्वसङ्कुलः ॥ ५२ ॥
घण्टापथः संसरणं श्रीपथो राजवर्त्म च ।
उपनिष्क्रमणं चोपनिष्करं च महापथः ॥ ५३ ॥
विपणिस्तु वणिग्मार्गः स्थानं तु पदमास्पदम् ।
श्लेषस्त्रिमार्ग्याः शृङ्गाटं बहुमार्गी तु चत्वरम् ॥५४॥
श्मशानं करवीरं स्यात्पितृप्रेताद् वनं गृहम् ।
गेहभूर्वास्तु गेहं तु गृहं वेश्म निकेतनम् ॥ ५५ ॥

---

कापथम् (पु० न०), पञ्च दुर्मार्गस्य ॥ ५० ॥ प्रान्तरम्, एकं छायाजलादिरहितदूरशून्यमार्गस्य ॥ कान्तार (पु० न०), एकं दुर्गममार्गस्य ॥ भुवः अन्तरे मध्ये यः गूढमार्गः सा सुरङ्गा, सन्धिला, "सन्धि" द्वे भूमौ गूढमार्गस्य ॥ ५१ ॥ चतुष्पथम्, संस्थानम्, चतुष्कम्, त्रीणि चतुष्पथस्य "चौक" इ० भा० ॥ त्रिपथम्, त्रिकम्, द्वे मार्गत्रयस्य ॥ द्विपथम्, चारपथः, द्वे मार्गद्वयस्य ॥ यः गजादीनां अध्वा सः असङ्कुलः, ॥५२॥ घण्टापथः, संसरणम्, श्रीपथः, राजवर्त्म, उपनिष्क्रमणम्, उपनिष्करम्, महापथः, अष्टौ राजमार्गस्य ॥ ५३ ॥ विपणि॰ (पु० स्त्री०), वणिग्मार्गः, द्वे हट्टमार्गस्य [ पण्यवीथी ] ॥ स्थानम्, पदम्, आस्पदम्, त्रीणि स्थानस्य ॥ शृङ्गाटम्, एकं मार्गत्रयसङ्गमस्य ॥ बहुमार्गी (स्त्री०), चत्वरम्, द्वे बहुमार्गसङ्गमस्य ॥ ५४ ॥ श्मशानम्, करवीरम्, पितृशब्दात् परौ वनगृहशब्दौ प्रयोज्यौ । यथा–पितृवनम्, पितृगेहम्, प्रेतशब्दात् परौ वनगृहशब्दौ प्रयोज्यौ । यथा–प्रेतवनम्, प्रेतगृहम्, षट् श्मशानस्य ॥ गेहभूः, वास्तु (पु० न०), द्वे गृहभुवः ॥

मन्दिरं सदनं सद्म निकाय्यो भवनं कुटः ।
आलयो निलयः शाला सभोद्वसितं कुलम् ॥५६॥
धिष्ण्यमावसथः स्थानं पस्त्यं संस्त्याय आश्रयः ।
ओको निवास आवासो वसतिः शरणं क्षयः ॥५७॥
धामागारं निशान्त च कुट्टिमं त्वस्य बद्धभूः ।
चतुःशाल संजवनं सौध तु नृपमन्दिरम् ॥ ५८ ॥
उपकारिकोपकार्या सिंहद्वार प्रवेशनम् ।
प्रासादो देवभूपाना हर्म्यं तु धनिना गृहम् ॥५९॥
मठावसथ्यावसथाः स्युश्छात्रव्रतिवेश्मनि ।

---

गेहम् (पु० न० ), गृहम् (पु० न० ), वेश्म, निकेतनम्, ॥ ५५ ॥ मन्दिरम् (स्त्री० न० ), सदनम्, "सादनम्" सद्म, निकाय्य, भवनम (पु० न० ), कुट (पु० स्त्री० ), आलय, निलय, शाला, सभा, उद्वसितम्, कुलम्, ॥ ५६ ॥ धिष्ण्यम्, आवसथ, स्थानम्, पस्त्यम, "वस्त्यम्" संस्त्याय, आश्रय, ओक (न० ), निवास, आवास, "वास" वसति ( स्त्री० ), शरणम्, क्षय, ॥ ५७ ॥ धाम, अगारम्, "आगारम्" निशान्तम्, एकत्रिंशद्गृहस्य । अत्र कुट, शाला, सभा, त्रीणि सभागृहस्येत्यन्ये ॥ कुट्टिमम् (पु० न०), एक पाषाणादिबद्धभूमे "फरसी" इ० भा० ॥ चतु शालम, संजवनम्, द्वे चतु शालस्य "चोकवालु घर" इ० भा० ॥ सौधम् ( पु० न० ), नृपमन्दिरम्, द्वे राजसदनस्य ॥ ५८ ॥ उपकारिका, उपकार्या, "उपकर्या" द्वे पटमण्डपादिनिर्मितनृपमन्दिरस्य । चत्वारोपि सौधादय पर्याया इत्यन्ये ॥ सिंहद्वारम्, प्रवेशनम्, द्वे नगरप्रवेशे प्रथमद्वारस्य ॥ प्रासाद, 'प्रसादन" एक देवाना भूपाना च गृहस्य ॥ हर्म्यम्, एक धनिना गृहस्य ॥ ५९ ॥ मठ (त्रि० ), आवसथ्यम्, आवसथ, त्रीणि छात्राणा व्रतिना च वसते ॥ पर्णशाला, उटज

पर्णशालोटजश्चैत्यविहारौ जिनसद्मनि ॥ ६० ॥
गर्भागारेऽपवरको वासौकः शयनास्पदम् ।
भाण्डागार तु कोशः स्याच्चन्द्रशाला शिरोगृहम् ॥६१॥
कुप्यशाला तु सन्धानी कायमान तृणौकसि ।
होत्रीय तु हविर्गेह प्राग्वंशः प्राग् हविर्गृहात् ॥६२॥
आथर्वणं शान्तिगृहमास्थानं गृहमिन्द्रकम् ।
तैलिशाला यन्त्रगृहमरिष्टं सूतिकागृहम् ॥ ६३ ॥
सूदशाला रसवती पाकस्थानं महानसम् ।

---

(पु० न० ), द्वे मुनेर्निवासस्य "झुपडी" इ० भा० ॥ चैत्यम्, विहार (पु० न० ), द्वे जिनमन्दिरस्य ॥ ६० ॥ गर्भागारम्, अपवरकम्, वासौक (न० ), "वासगृहम्" शयनास्पदम्, चत्वारि गर्भागारस्य "ओरडो" इ० भा० ॥ भाण्डागारम्, कोश (पु० न० ), द्वे भाण्डागारस्य "भंडार" इ० भा० ॥ चन्द्रशाला, शिरोगृहम्, द्वे शिरोगृहस्य "अगाशी" इ० भा० ॥ ६१ ॥ कुप्यशाला, सन्धानी, द्वे ताम्रादिपात्रनिधानस्थानस्य ॥ कायमानम्, तृणौक (न०), द्वे गृहोपरि तृणकाष्ठादिनिर्मितगृहस्य "मेडी" इ० भा० ॥ होत्रीयम्, हविर्गेहम्, द्वे होमगृहस्य ॥ यत् हविर्गृहात् प्राग् पूर्वदेशे गृहम् स प्राग्वंश, इति एकम् ॥ ६२ ॥ आथर्वणम्, शान्तिगृहम्, "शान्तीगृहकम्" द्वे शान्तिगृहस्य ॥ आस्थानगृहम्, "आस्थानीगृहम्" इन्द्रकम्, द्वे सभागृहस्य ॥ तैलिशाला, यन्त्रगृहम्, द्वे तैलिशालाया "तेलकाढवानु स्थान" इ० भा० ॥ अरिष्टम्, सूतिकागृहम्, द्वे सूतिकागृहस्य ॥ ६३ ॥ सूदशाला, रसवती, पाकस्थानम्, महानसम्, चत्वारि पाकस्थानस्य "रसोडु" इ० भा० ॥ हलिशाला, चतुरम्, द्वे हलिशालायाः

---

१ तृण काष्ठाद्युपलक्षणम् ।

हस्तिशाला तु चतुर वाजिशाला तु मन्दुरा ॥६४॥
सन्दानिनी तु गोशाला चित्रशाला तु जालिनी ।
कुम्भशाला पाकपुटी तन्तुशाला तु गर्तिका ॥६५॥
नापितशाला वपनी शिल्पा खरकुटी च सा ।
आवेशन शिल्पिशाला सत्रशाला प्रतिश्रयः ॥६६॥
आश्रमस्तु मुनिस्थानमुपघ्नस्त्वन्तिकाश्रयः ।
प्रपा पानीयशाला स्याद्गञ्जा तु मदिरागृहम् ॥६७॥
पक्कणः शबरावासो घोषस्त्वाभीरपल्लिका ।
पण्यशाला निषद्याऽट्टो हट्टो विपणिरापणः ॥६८॥

---

"हाथीनु थाण" इ० भा० ॥ वाजिशाला, मन्दुरा (स्त्री० न०), द्वे अश्वशालाया ॥६४॥ सन्दानिनी, गोशाला, द्वे गोशालाया ॥ चित्रशाला, जालिनी, द्वे चित्रशालाया ॥ कुम्भशाला, पाकपुटी, द्वे कुम्भशालाया "निभाडो" इ० भा० ॥ तन्तुशाला, गर्तिका, द्वे तन्तुशालाया "कापड वणवानु स्थान" इ० भा० ॥ ६५ ॥ नापितशाला, वपनी, शिल्पा, खरकुटी, चत्वारि नापितशालाया ॥ आवेशनम्, शिल्पिशाला, द्वे शिल्पिशालाया ॥ सत्रशाला, प्रतिश्रय, द्वे सत्रशालाया "याचकोने अन्न आपवानु स्थान" ॥६६॥ आश्रम (पु० न०), मुनिस्थानम्, द्वे मुनिस्थानस्य ॥ उपघ्न, अन्तिकाश्रय, द्वे आसन्नगृहस्य "पाडोशीनु घर" इ० भा० ॥ प्रपा, पानीयशाला, द्वे पानीयशालाया "परब" इ० भा० ॥ गञ्जा, मदिरागृहम्, द्वे मदिरागृहस्य ॥ ६७ ॥ पक्कण (पु० न०), शबरावास, द्वे भिल्लगृहस्य । भिल्लग्रामस्येत्यन्ये ॥ घोष, आभीरपल्लिका, "आभीरपल्ली, आभीरपल्लि" द्वे गोपाना गृहस्य ग्रामस्य च ॥ पण्यशाला, निषद्या, अट्ट (पु० न०), हट्ट, विपणि (स्त्री०), "विपणी" आपण, षट् पण्यशालाया "हाट, दुकान" ॥ ६८ ॥

पर्णशालोटजश्चैत्यविहारौ जिनसद्मनि ॥ ६० ॥
गर्भागारेऽपवरको वासौकः शयनास्पदम् ।
भाण्डागारं तु कोशः स्याच्चन्द्रशाला शिरोगृहम् ॥६१॥
कुप्यशाला तु सन्धानी कायमानं तृणौकसि ।
होत्रीयं तु हविर्गेहं प्राग्वंशः प्राग् हविर्गृहात् ॥६२॥
आथर्वणं शान्तिगृहमास्थानं गृहमिन्द्रकम् ।
तैलिशाला यन्त्रगृहमरिष्टं सूतिकागृहम् ॥ ६३ ॥
सूदशाला रसवती पाकस्थानं महानसम् ।

---

( पु० न० ), द्वे मुनेर्निवासस्य "झुपडी" इ० भा० ॥ चैत्यम्, विहार ( पु० न० ), द्वे जिनमन्दिरस्य ॥ ६० ॥ गर्भागारम्, अपवरकम्, वासौक ( न० ), "वासगृहम्" शयनास्पदम्, चत्वारि गर्भागारस्य "ओरडो" इ० भा० ॥ भाण्डागारम्, कोश ( पु० न० ), द्वे भाण्डागारस्य "भंडार" इ० भा० ॥ चन्द्रशाला, शिरोगृहम्, द्वे शिरोगृहस्य "अगाशी" इ० भा० ॥ ६१ ॥ कुप्यशाला, सन्धानी, द्वे ताम्रादिपाननिधानस्थानस्य ॥ कायमानम्, तृणौक (न०), द्वे गृहोपरि तृणकाष्ठादिनिर्मितगृहस्य "मेडी" इ० भा० ॥ होत्रीयम्, हविर्गेहम्, द्वे होमगृहस्य ॥ यत् हविर्गृहात् प्राक् पूर्वदेशे गृहम् स प्राग्वंश, इति एकम् ॥ ६२ ॥ आथर्वणम्, शान्तिगृहम्, "शान्तीगृहकम्" द्वे शान्तिगृहस्य ॥ आस्थानगृहम्, "आस्थानीगृहम्" इन्द्रकम्, द्वे सभागृहस्य ॥ तैलिशाला, यन्त्रगृहम्, द्वे तैलिशालाया "तेलकाढवानु स्थान" इ० भा० ॥ अरिष्टम्, सूतिकागृहम्, द्वे सूतिकागृहस्य ॥ ६३ ॥ सूदशाला, रसवती, पाकस्थानम्, महानसम्, चत्वारि पाकस्थानस्य "रसोडु" इ० भा० ॥ हस्तिशाला, चतुरम्, द्वे हस्तिशालायाः

---

१ तृण काष्ठेऽप्यटक्षणम् ।

**प्रच्छन्नमन्तर्द्वारं स्याद्बहिर्द्वारं तु तोरणम् ॥ ७३ ॥**
**तोरणोर्ध्वे तु मङ्गल्य दाम वन्दनमालिका ।**
**स्तम्भादेः स्यादधोदारौ शिला नासोर्ध्वदारुणि॥७४॥**
**गोपानसी तु वलभीच्छादने वक्रदारुणि ।**
**गृहावग्रहणी देहल्युम्बरोदुम्बरोम्बुराः ॥ ७५ ॥**
**प्रघाणः प्रघणोऽलिन्दो बहिर्द्वारप्रकोष्ठके ।**
**कपोतपाली विटङ्कः पटलरुछदिषी समे ॥ ७६ ॥**
**नीव्र वलीकं तत्प्रान्त इन्द्रकोशस्तमङ्ककः ।**
**वलभी छदिराधारो नागदन्तास्तु दन्तकाः ॥ ७७ ॥**

---

इ० भा० ॥ प्रच्छन्नम्, अन्तर्द्वारम्, द्वे गुप्तद्वारस्य "बारि" इ० भा० । पश्चद्वारस्येत्यन्ये[1] ॥ बहिर्द्वारम्, तोरणम् (पु० न०), द्वे बहिर्द्वारस्य ॥ ७३ ॥ वन्दनमालिका, एक तोरणस्योपरि मङ्गलार्थं सहकारादिपल्लवनिर्मिताया मालाया ॥ स्तम्भादे· अधोदारुणि शिला, "शिली" एक द्वारस्तम्भाधारदारुण ॥ नासा, एक द्वारस्तम्भोर्ध्वदारुण ॥ ७४ ॥ गोपानसी "गोपानसि" एक पटलाधाराच्छादनवक्रदारुण । गोपानसी, वलभी, द्वे इत्यन्ये ॥ गृहावग्रहणी, देहली, "देहलि" उम्बर, उदुम्बुर, उम्बुर, पञ्च देहल्या "ऊमरो" इ० भा० ॥ ७५ ॥ प्रघाण, प्रघण, अलिन्द, त्रीणि द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्कस्य "पगथियु" इ० भा० । बहिर्द्वारनिकटस्थानस्य वा "ओटलो" इ० भा० ॥ कपोतान् पालयतीति–कपोतपाली, विटङ्क (पु० न०), द्वे पक्षिविश्रमार्थं बहिर्निर्गतदारुण । कृत्रिमपक्षिस्थानस्येत्यन्ये ॥ पटलम् (त्रि०), छदि (स्त्री० न०), द्वे गृहाच्छादनस्य "छापरु" इ० भा० ॥ ७६ ॥ नीव्रम्, "नीध्रम्" वलीकम् (पु० न०), द्वे पटलप्रान्तस्य "नेवु" इ० भा० ॥ इन्द्रकोश, तमङ्ग द्वे हर्म्यनिर्यूहस्य "छापरा पासे मूलतो रवेश" इ० भा० ॥ वलभी, "वलभि,

---

१ "प्रच्छन्नमन्तर्द्वारं यत् पक्षद्वारं तदुच्यते" इति काल ॥

वेश्याऽऽश्रयः पुरं वेशो मण्डपस्तु जनाश्रयः ।
कुड्यं भित्तिस्तदेडूकमन्तर्निहितकीकसम् ॥ ६९ ॥
वेदी वितर्दिरजिरं प्राङ्गणं चत्वराङ्गने ।
वलजं प्रतीहारो द्वाद्वरिऽथ परिघोऽर्गला ॥ ७० ॥
साऽल्पा त्वर्गलिका सूचिः कुञ्चिकायां तु कूचिका ।
साधारण्यङ्कुटश्चासौ द्वारयन्त्रं तु तालकम् ॥ ७१ ॥
अस्योद्घाटनयन्त्र तु ताल्यपि प्रतिताल्यपि ।
तिर्यग्द्वारोर्ध्वदारूत्तरङ्गं स्यादररं पुनः ॥ ७२ ॥
कपाटोऽररिः कुवाट' पक्षद्वारं तु पक्षकः ।

---

वेश्याश्रय, पुरम्, वेश, त्रीणि वेश्यागृहस्य ॥ मण्डप (पु० न०), जनाश्रय, द्वे मण्डपस्य "माडवो" इ० भा० ॥ कुड्यम् (पु० न०), भित्ति, द्वे भित्ते "भीत" इ० भा० ॥ तत् कुड्यम् अन्तर्निहितकीकस चेत् एडूकम्, "एडुकम्, एडोकम्" एक कठिनद्रव्यमयकुड्यस्य ॥ ६९ ॥ वेदी, "वेदि" वितर्दि (स्त्री०), द्वे वेद्या "ओटलो" इ० भा० ॥ अजिरम्, प्राङ्गणम्, "अङ्गणम्" चत्वरम्, अङ्गनम्, चत्वारि चत्वरस्य "आगणु" इ० भा० ॥ वलजम्, प्रतीहार, द्वा -द्वारौ द्वार (स्त्री०), द्वारम्, चत्वारि द्वारस्य "धारणु" इ० भा० ॥ परिघ, अर्गला (त्रि०), द्वे परिघस्य "भोगळ" इ० भा० ॥ ७० ॥ अर्गलिका, सूचि (स्त्री०), द्वे अल्पार्गलाया "आगळीओ" इ० भा० ॥ कुञ्चिका, कूचिका, साधारणी, अङ्कुट, चत्वारि कूचिकाया ॥ द्वारयन्त्रम्, तालकम्, द्वे तालकस्य "तालु" इ० भा० ॥ ७१ ॥ ताली, प्रतिताली, द्वे तालकोद्घाटनयन्त्रस्य "कूची" इ० भा० ॥ उत्तरङ्गम्, एक द्वारोपरि निहितदारुण ॥ अररम् (त्रि०), ॥ ७२ ॥ कपाट, "कवाट" अररि (पु० न०), कुवाट, चत्वारि कपाटस्य "कमाड" इ० भा० ॥ पक्षद्वारम्, पक्षक (पु० न०), द्वे पक्षद्वारस्य [खटकिका] "पाछळनु बारणु"

प्रच्छन्नमन्तर्द्वारं स्याद्बहिर्द्वारं तु तोरणम् ॥ ७३ ॥
तोरणोर्ध्वे तु मङ्गल्यं दाम वन्दनमालिका ।
स्तम्भादेः स्यादधोदारौ शिला नासोर्ध्वदारुणि॥७४॥
गोपानसी तु वलभीच्छादने वक्रदारुणि ।
गृहावग्रहणी देहल्युम्बरोदुम्बरोम्बुराः ॥ ७५ ॥
प्रघाण' प्रघणोऽलिन्दो बहिर्द्वारप्रकोष्ठके ।
कपोतपाली विटङ्कः पटलच्छदिषी समे ॥ ७६ ॥
नीव्र वलीक तत्प्रान्त इन्द्रकोशस्तमङ्गकः ।
वलभी छदिराधारो नागदन्तास्तु दन्तकाः ॥ ७७ ॥

---

इ० भा० ॥ प्रच्छन्नम्, अन्तर्द्वारम्, द्वे गुप्तद्वारस्य "बारि" इ० भा० । [1]पक्षद्वारस्येत्यन्ये ॥ बहिर्द्वारम्, तोरणम् (पु० न० ), द्वे बहिर्द्वारस्य ॥ ७३ ॥ वन्दनमालिका, एक तोरणस्योपरि मङ्गलार्थं सहकारादिपल्लवनिर्मितायां मालाया ॥ स्तम्भादे' अधोदारुणि शिला, "शिली" एक द्वारस्तम्भाधारदारुण ॥ नासा, एक द्वारस्तम्भोर्ध्वदारुण ॥ ७४ ॥ गोपानसी "गोपानसि" एक पटलाधाराच्छादनवक्रदारुण । गोपानसी, वलभी, द्वे इत्यन्ये ॥ गृहावग्रहणी, देहली, "देहलि" उम्बर, उदुम्बुर, उम्बुर, पञ्च देहल्या "ऊमरो" इ० भा० ॥ ७५ ॥ प्रघाण, प्रघण, अलिन्द, त्रीणि द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्कस्य "पगथियु" इ० भा० । बहिर्द्वारनिकटस्थानस्य वा "ओटलो" इ० भा० ॥ कपोतान् पालयतीति-कपोतपाली, विटङ्क (पु० न०), द्वे पक्षिविश्रमार्थं बहिर्निर्गतदारुण । कृत्रिमपक्षिस्थानस्येत्यन्ये ॥ पटलम् (त्रि० ), छदि (स्त्री० न० ), द्वे गृहाच्छादनस्य "छापरु' इ० भा० ॥ ७६ ॥ नीव्रम्, "नीध्रम्" वलीकम् ( पु० न० ), द्वे पटलप्रान्तस्य "नेवु" इ० भा० ॥ इन्द्रकोश, तमङ्ग द्वे हर्म्यनिर्यूहस्य "छापरा पासे झुलतो रवेश" इ० भा० ॥ वलभी, "वलभि,

---

1 "प्रच्छन्नमन्तर्द्वारं यत् पक्षद्वारं तदुच्यते" इति काल ॥

**मत्तालम्बोऽपाश्रयः स्यात्प्रग्रीवो मत्त**
**वातायनो गवाक्षश्च जालकेऽथान्नकोष्ठ**
**कुसूलोऽश्रिस्तु कोणोऽणिः कोटिः पा**
**आरोहण तु सोपानं निःश्रेणिस्त्वधिर**
**स्थूणा स्तम्भः सालभञ्जी पाञ्चालिका**
**काष्ठादिघटिता लेप्यमयी त्वञ्जलिकार्<br>**
**नन्द्यावर्तप्रभृतयो विच्छन्दा आढ्यवे**
**समुद्गः सपुटः पेटा स्यान्मञ्जूषाऽथ शो**

वडमी" एक छदिराधारस्य ॥ नागदन्त , दन्तव "खींट" इ० भा० ॥ ७७ ॥ मत्तालम्ब , ( पु० न० ), मत्तवारण , चत्वारि अपाश्रयस्य " फरतु वेसवानु स्थान, छज्जु" ॥ वातायन ( पु० जालकम्, त्रीणि वातयनस्य "गोख, जाळी" इ० कोष्ठक , कुसूल , "कुशूल " द्वे धान्यगृहस्य "धा इ० भा० ॥ ७८ ॥ अश्रि (स्त्री० ), कोण , अणि ( कोटि (स्त्री० ), पाली, "पाली " अस्र , पट् कोणस्य इ० भा० ॥ आरोहणम् , सोपानम् , द्वे आरोहणस्य- कादिरचितारोहणमार्गस्येत्यर्थ "दादरो" इ० भा० ॥ ( स्त्री० ), "नि श्रेणी" अधिरोहणी, द्वे काष्ठमयाधिरो "शिडी" इ० भा० ॥७९॥ स्थूणा, स्तम्भ , द्वे स्तम्भस्य "था इ० भा० ॥ सालभञ्जी, "शालभञ्जी" पाञ्चालिका, पु त्रीणि काष्ठादिघटितपुत्रिकाया "पुतळी, ढिंगली" इ० भा० लेप्यमयी, अञ्जलिकारिका, द्वे लेप्यनिर्मितपुत्रिकाया ॥ ८० आढ्यवेश्मना धनिना गृहाणा नन्द्यावर्तप्रभृतय विच्छन्दा रचन विशेषा सन्ति ॥ समुद्ग , सपुट , "पुट " द्वे भूषणादिस्थापन भाजनस्य "डाबडो" इ० भा० ॥ पेटा, "पेटी, पेटक , पिटक " मञ्जूषा, द्वे मञ्जूषाया "पेटी" इ० भा० "शोधनी" ॥ ८१ ॥

**संमार्जनी बहुकरी वर्धनी च समूहनी ।**
**सङ्करावकरौ तुल्यावुदूखलमुलूखलम् ॥ ८२ ॥**
**प्रस्फोटनं तु पवनमवघातस्तु कण्डनम् ।**
**कटः किलिञ्जो मुसलोऽयोग्रं कण्डोलकः पिटम् ॥८३॥**
**चालनी तितउः शूर्पं प्रस्फोटनमथान्तिका ।**
**चुल्ल्यश्मन्तकमुद्धानं स्यादधिश्रयणी च सा ॥ ८४ ॥**
**स्थाल्युखा पिठरं कुण्डं चरुः कुम्भी घटः पुनः ।**
**कुटः कुम्भः करीरश्च कलशः कलसो निपः ॥ ८५ ॥**

---

समार्जनी, बहुकरी ( पु० स्त्री० ), वर्धनी, समूहनी, पञ्च समार्जन्या "सावरणी" इ० भा० ॥ सङ्कर , अवकर , द्वे सङ्करस्य "पूजो" इ० भा० ॥ उदूखलम्, उलूखलम्, द्वे कण्डनभाण्डस्य "खाडणीओ" इ०भा० ॥८२॥ प्रस्फोटनम्, एकं निर्बुसीकरणस्य ॥ पवनम्, एकं तुषादिशोधनस्य "झाटकवु" इ० भा०॥ अवघात , कण्डनम्, द्वे मुसलेन धान्याद्यवहननस्य "खाडवु" इ० भा० ॥ कट (त्रि०), किलिञ्ज , द्वे वंशवीरणादिनिर्मितास्तरणस्य "सादडी चटई" इ० भा० ॥ मुसल , अयोग्रम् ( पु० न० ), "अयोनि" द्वे मुसलस्य "सावेलु" इ० भा० ॥ कण्डोलक , पिटम् (पु०न०), "पिटक" द्वे वंशनिर्मितभाण्डस्य "वासनी टोपली" इ० भा० ॥८३॥ चालनी (स्त्री० न०), तितउ (पु० न० ), द्वे चालन्या ॥ शूर्पम् (पु० न० ), प्रस्फोटनम् ( पु० न० ), द्वे धान्यादिनिष्पवनभाण्डस्य "सुपडु" इ० भा० ॥ अन्तिका, "अन्ती" चुल्ली, "चुल्लि" अश्मन्तम्, उद्धानम्, अधिश्रयणी, पञ्च चुल्ल्या "चूलो" इ० भा० ॥ ८४ ॥ स्थाली, उखा, "उषा" पिठरम् ( त्रि० ), कुण्डम् ( त्रि० ), चरु ( पु० ), कुम्भी, षट् स्थाल्या ॥ घट ( पु० स्त्री० ), कुट ( पु० न० ), कुम्भ ( पु० स्त्री० ), करीरम्

---

१ स्त्रियाम् घटी ।
अ० वि० २०

**मत्तालम्बोऽपाश्रयः स्यात्प्रग्रीवो मत्तवारणे।**
**वातायनो गवाक्षश्च जालकेऽथान्नकोष्टकः ॥ ७८ ॥**
**कुसूलोऽश्रिस्तु कोणोऽणिः कोटि पाल्यस्र इत्यपि।**
**आरोहण तु सोपानं निःश्रेणिस्त्वधिरोहणी ॥ ७९ ॥**
**स्थूणा स्तम्भः सालभञ्जी पाञ्चालिका च पुत्रिका।**
**काष्ठादिघटिता लेप्यमयी त्वञ्जलिकारिका ॥ ८० ॥**
**नन्द्यावर्तप्रभृतयो विच्छन्दा आढ्यवेश्मनाम्।**
**समुद्गः सपुटः पेटा स्यान्मञ्जूषाऽथ शोधनी ॥ ८१ ॥**

---

वडभी" एक छदिराधारस्य ॥ नागदन्त, दन्तक, द्वे नागदन्तस्य "खींट" इ० भा० ॥ ७७ ॥ मत्तालम्ब, अपाश्रय, प्रग्रीव (पु० न०), मत्तवारण, चत्वारि अपाश्रयस्य "मह्रेलनी दीवालनी फरतु वेसवानु स्थान, छज्जु" ॥ वातायन (पु० न०), गवाक्ष, जालकम्, त्रीणि वातयनस्य "गोख, जाली" इ० भा० ॥ अन्न-कोष्टक, कुसूल, "कुशूल" द्वे धान्यगृहस्य "धान्यनो कोठार" इ० भा० ॥ ७८ ॥ अश्रि (स्त्री०), कोण, अणि (पु० स्त्री०), कोटि (स्त्री०), पाली, "पाली" अस्र, षट् कोणस्य "खुणो" इ० भा० ॥ आरोहणम्, सोपानम्, द्वे आरोहणस्य—पाषाणेष्ट-कादिरचितारोहणमार्गस्येत्यर्थ "दादरो" इ० भा० ॥ नि श्रेणि (स्त्री०), "नि श्रेणी" अधिरोहणी, द्वे काष्ठमयाधिरोहिण्या "शिडी" इ० भा० ॥७९॥ स्थूणा, स्तम्भ, द्वे स्तम्भस्य "थाभलो" इ० भा० ॥ सालभञ्जी, "शालभञ्जी" पाञ्चालिका, पुत्रिका, त्रीणि काष्ठादिघटितपुत्रिकाया "पुतळी, ढिंगली" इ० भा० ॥ लेप्यमयी, अञ्जलिकारिका, द्वे लेप्यनिर्मितपुत्रिकाया ॥ ८० ॥ आढ्यवेश्मना धनिना गृहाणा नन्द्यावर्तप्रभृतय विच्छन्दा रचना-विशेषा सन्ति ॥ समुद्ग, सपुट, "पुट" द्वे भूषणादिस्थापन भाजनस्य "डाबडो" इ० भा० ॥ पेटा, "पेटी, पेटक, पिटक" मञ्जूषा, द्वे मञ्जूषाया "पेटी" इ० भा० "शोधनी" ॥ ८१ ॥

शालाजीरो वर्धमानः शरावः कोशिका पुनः ।
मल्लिका चषकः कंसः पारी स्यात्पानभाजनम् ॥९०॥
कुतूश्चर्मस्नेहपात्रं कुतुपस्तु तदल्पकम् ।
दृतिः खल्लश्चर्ममयी त्वालूः करकपत्रिका ॥ ९१ ॥
सर्वमावपनं भाण्डं पात्रामत्रे तु भाजनम् ।
तद्विशालं पुनः स्थालं स्यात्पिधानमुदञ्चनम् ॥ ९२ ॥
शैलोऽद्रिःशिखरीशिलोच्चयगिरीगोत्रोऽचलःसानुमान्
ग्रावा पर्वतभूध्रभूधरधराहार्या नगोऽथोदयः ।
पूर्वाद्रिश्चरमाद्रिरस्त उदगद्रिस्त्वद्रिराण्मेनका-
प्राणेशो हिमवान् हिमालयहिमप्रस्थौ भवानीगुरुः ॥९३॥

---

त्रीणि मन्थदण्डकटकस्य "माकडी" इ० भा० ॥ ८९ ॥ शाला-जीर, वर्धमान (पु० न०), शराव (पु० न०), त्रीणि शरा-वस्य "रामपातर" इ० भा० ॥ कोशिका, मल्लिका, चषक (पु० न०), कंस (पु० न०), पारी, पानभाजनम्, षट् पानभाज-नस्य ॥ ९० ॥ कुतू (स्त्री०), एकं चर्मस्नेहपात्रस्य "कुडलो" इ० भा० ॥ कुतुप (पु० न०), एकम् लघुचर्मस्नेहपात्रस्य "कुडली" इ० भा० ॥ दृति (पु०), खल्ल (पु० न०), द्वे चर्म-पुटस्य "पखाल" इ० भा० ॥ करकपत्रिका, एकं चर्ममय्या आल्वाः "चामडानी झारी" ॥ ९१ ॥ आवपनम्, भाण्डम्, द्वे सामान्येन भाण्डस्य ॥ पात्रम्, अमत्रम्, भाजनम्, त्रीणि पात्रस्य "वासण" इ० भा० ॥ आवपनादय पञ्चापि पर्याया इत्यन्ये ॥ तद् भाजनं विशालं चेत् स्थालम्, एकं विशालभाजनस्य ॥ पिधानम्, उदञ्च-नम्, द्वे पिधानस्य "ढाकणी" इ० भा० ॥ ९२ ॥ शैल, अद्रि, शिखरी, शिलोच्चय, गिरि, गा महीं त्रायते गोत्र, अचल, सानुमान्, ग्रावा, पर्वत, भूध्र, भूधर, धर, अहार्य, नग, "अग" पञ्चदश पर्वतस्य [प्रपाती, कुट्टार, उर्वङ्ग, कन्दराकर] ॥

**हसन्यङ्गाराच्छकटीधानीपात्र्यो हसन्तिका ।**
**आष्ट्रोऽम्बरीष ऋचीषमृजीषं पिष्टपाकभृत् ॥ ८६ ॥**
**कम्बिर्दर्विः खजाकाऽथ स्यात्तर्दूर्दारुहस्तकः ।**
**वार्धान्या तु गलन्त्यालूः कर्करी करकोऽथ सः ॥८७॥**
**नालिकेरजः करङ्कस्तुल्यौ कटाहकर्परौ ।**
**मणिकोऽलिञ्जरो गर्गरीकलश्यौ तु मन्थनी ॥ ८८ ॥**
**वैशाखः खजको मन्था मन्थानो मन्थदण्डकः ।**
**मन्थः क्षुब्धोऽस्य विष्कम्भो मञ्जीरः कुटरोऽपि च ८९**

---

(पु० न० ), कलश (त्रि०), कलस (त्रि०), निप (पु०न०); सप्त कलशस्य ॥ ८५ ॥ हसनी, अङ्गारशब्दात् शकटी–धानी–पात्रीशब्दा प्रयोज्या । यथा–अङ्गारशकटी, अङ्गारधानी, अङ्गारपात्री, हसन्तिका, "हसन्ती" पञ्च अङ्गारशकट्या "शगडी" इ० भा० ॥ भ्राष्ट्र ( पु० न० ), अम्बरीष ( पु० न० ), द्वे चणकादिभर्जनपात्रस्य ॥ ऋचीषम्, ऋजीषम्, द्वे पिष्टभक्ष्यभर्जनभाजनस्य "तवी, तावडी" इ० भा० ॥ ८६ ॥ कम्बि (स्त्री०), "कम्बी" दर्वि (स्त्री०), "दर्वी" खजाका, त्रीणि दर्व्या "कडछी" इ० भा० ॥ तर्दू (स्त्री० ), दारुहस्तक , द्वे दारुमयपरिवेषणभाण्डस्य "लाकडानी कडछी" इ० भा० ॥ वार्धानी, गलन्ती, आलू (स्त्री० ), "आलु" कर्करी, करक (पु० न०), पञ्च तण्डुलादिप्रक्षालनोपयोगिभाजनस्य "गळणी अथवा झारी" इ० भा० ॥८७॥ करङ्क , एकं नालिकेरफलनिष्पन्नभाजनस्य ॥ कटाह (स्त्री०), कर्पर , द्वे कटाहस्य "कढाई" इ० भा० ॥ मणिक (पु० न०), अलिञ्जर (पु० न०), "अलञ्जर" द्वे महत्त्व कुम्भस्य ॥ गर्गरी, कलशी, "कलशी" मन्थनी, त्रीणि मन्थन्या "दहि वलोववानी, गोळी" इ० भा० ॥८८॥ वैशाख, खजक , "खज" मन्था मन्थानौ, मन्थान , मन्थदण्ड , मन्थ , क्षुब्ध , सप्त मन्थदण्डकस्य "रवैयो" इ० भा० ॥ विष्कम्भ , मञ्जीर , कुटर , "कुटक"

शालाजीरो वर्धमानः शरावः कोशिका पुनः ।
मल्लिका चषकः कंसः पारी स्यात्पानभाजनम् ॥९०॥
कुतूश्चर्मस्नेहपात्रं कुतुपस्तु तदल्पकम् ।
दृति खल्लश्चर्ममयी त्वालूः करकपत्रिका ॥ ९१ ॥
सर्वमावपन भाण्डं पात्रामत्रे तु भाजनम् ।
तद्विशालं पुनः स्थाल स्यात्पिधानमुद्ञ्चनम् ॥ ९२ ॥
शैलोऽद्रिःशिखरीशिलोच्चयगिरीगोत्रोऽचलःसानुमान्
ग्रावा पर्वतभूध्रभूधरधराहार्यो नगोऽथोदयः ।
पूर्वाद्रिश्चरमाद्रिरस्त उदगद्रिस्त्वद्रिराण्मेनका-
प्राणेशो हिमवान् हिमालयहिमप्रस्थौ भवानीगुरुः ॥९३॥

---

त्रीणि मन्थदण्डकटकस्य "माकडी" इ० भा० ॥ ८९ ॥ शाला-जीर, वर्धमान (पु० न०), शराव (पु० न०), त्रीणि शरा-वस्य "रामपातर" इ० भा० ॥ कोशिका, मल्लिका, चषक (पु० न०), कंस (पु० न०), पारी, पानभाजनम्, षट् पानभाज-नस्य ॥ ९० ॥ कुतू (स्त्री०), एकं चर्मस्नेहपात्रस्य "कुडलो" इ० भा० ॥ कुतुप (पु० न०), एकम् लघुचर्मस्नेहपात्रस्य "कुडली" इ० भा० ॥ दृति (पु०), खल्ल (पु० न०), द्वे चर्म-पुटस्य "पखाल" इ० भा० ॥ करकपत्रिका, एकं चर्ममय्या आल्वा "चामडानी झारी" ॥ ९१ ॥ आवपनम्, भाण्डम्, द्वे सामान्येन भाण्डस्य ॥ पात्रम्, अमत्रम्, भाजनम्, त्रीणि पात्रस्य "वासण" इ० भा० ॥ आवपनादय पञ्चापि पर्याया इत्यन्ये ॥ तद् भाजन विशाल चेत् स्थालम्, एकं विशालभाजनस्य ॥ पिधानम्, उदञ्च-नम्, द्वे पिधानस्य "ढाकणी" इ० भा० ॥ ९२ ॥ शैल, अद्रि, शिखरी, शिलोच्चय, गिरि, गां महीं त्रायते गोत्र, अचल, सानुमान्, ग्रावा, पर्वत, भूध्र, भूधर, धर, अहार्य, नग, "अग" पञ्चदश पर्वतस्य [प्रपाती, कुट्टार, उर्वङ्ग, कन्दराकर] ॥

**हिरण्यनाभो मैनाकः सुनाभश्च तदात्मजः ।**
**रजताद्रिस्तु कैलासोऽष्टापदः स्फटिकाचलः ॥ ९४ ॥**
**क्रौञ्चः कुञ्चोऽथ मलय आषाढो दक्षिणाचलः ।**
**स्यान्माल्यवान् प्रस्रवणो विन्ध्यस्तु जलवालकः ॥९५॥**
**शत्रुञ्जयो विमलाद्रिरिन्द्रकीलस्तु मन्दरः ।**
**सुवेलः स्यात्त्रिमुकुटस्त्रिकूटस्त्रिककुच्च सः ॥ ९६ ॥**
**उज्जयन्तो रैवतकः सुदारुः पारियात्रिकः ।**
**लोकालोकश्चक्रवालोऽथ मेरुः कर्णिकाचलः ॥ ९७ ॥**
**रत्नसानुः सुमेरुः स्वःस्वर्गिकाञ्चनतो गिरिः ।**

---

उदय, पूर्वाद्रि, द्वे उदयाचलस्य ॥ चरमाद्रि, अस्त, द्वे अस्ताचलस्य ॥ उदगद्रि, अद्रिराट्, मेनकाप्राणेश, हिमवान्, हिमालय, हिमप्रस्थ, भवानीगुरु, सप्त हिमालयस्य ॥९३॥ हिरण्यनाभ, मैनाक, सुनाभ, त्रीणि हिमालयात्मजस्य मैनाकपर्वतस्य ॥ रजताद्रि, कैलास, अष्टापद, स्फटिकाचल, चत्वारि कैलासपर्वतस्य [ धनदावास, हराद्रि, हिमवद्धस ] ॥ ९४ ॥ क्रौञ्च, कुञ्च, "क्रौञ्च" द्वे क्रौञ्चपर्वतस्य ॥ मलय (पु० न०), आषाढ, दक्षिणाचल, त्रीणि मलयपर्वतस्य [ चन्दनगिरि ] ॥ माल्यवान्, प्रस्रवण, द्वे माल्यवत ॥ विन्ध्य, जलवालक, द्वे विन्ध्यपर्वतस्य ॥ ९५ ॥ शत्रुञ्जय, विमलाद्रि, द्वे शत्रुंजयपर्वतस्य ॥ इन्द्रकील, मन्दर, द्वे मन्दराचलस्य ॥ सुवेल, त्रिमुकुट, त्रिकूट, त्रिककुद्, चत्वारि त्रिकूटाचलस्य ॥ ९६ ॥ उज्जयन्त, रैवतक, द्वे रैवतकपर्वतस्य "गिरनार" इ० भा० ॥ सुदारु, पारियात्रिक, द्वे पारियात्रिकपर्वतस्य ॥ लोकालोक, चक्रवाल, द्वे लोकालोकपर्वतस्य ॥ मेरु, कर्णिकाचल, ॥ ९७ ॥ रत्नसानु, सुमेरु, स्वर्-स्वर्गि-काञ्चनशब्देभ्य परो गिरिशब्दः प्रयोज्य । यथा—स्वर्गिरि, स्वर्गिगिरि, काञ्चनगिरि, सप्त मेरुपर्वतस्य ॥

शृङ्गं तु शिखरं कूटं प्रपातस्त्वतटो भृगुः ॥ ९८ ॥
मेखला मध्यभागोऽद्रेर्नितम्बः कटकश्च सः ।
दरी स्यात्कन्दरोऽखातबिले तु गह्वरे गुहा ॥ ९९ ॥
द्रोणी तु शैलयोः सन्धिः पादाः पर्यन्तपर्वताः ।
दन्तकास्तु बहिस्तिर्यक्प्रदेशा निर्गता गिरेः ॥ १०० ॥
अधित्यकोर्ध्वभूमिः स्यादधोभूमिरुपत्यका ।
स्नुः प्रस्थं सानुरश्मा तु पाषाणः प्रस्तरो दृषत् ॥१०१॥
ग्रावा शिलोपलो गण्डशैलाः स्थूलोपलाश्च्युताः ।
स्यादाकरः खनिः खानिर्गञ्जा धातुस्तु गैरिकम् ॥१०२॥

---

शृङ्गम् ( पु० न० ), शिखरम् ( पु० न० ), कूटम् ( पु० न० ), त्रीणि शिखरस्य ॥ प्रपात अतट, "तट" भृगु ( पु० ), त्रीणि पर्वतात् पतनस्थानस्य ॥ ९८ ॥ मेखला, नितम्ब, कटक ( पु० न० ), त्रीणि अद्रेर्मध्यभागस्य ॥ दरी ( स्त्री० ), कन्दर ( त्रि० ), द्वे कृत्रिमगिरिविलस्य ॥ गह्वरम् ( पु० न० ), गुहा, द्वे अकृत्रिमगिरिविलस्य "गुफा" इ० भा० ॥ दरीप्रमुखा चत्वारोऽपि पर्याया इत्येके ॥ ९९ ॥ य शैलयो सन्धि सा द्रोणी ( स्त्री० ), एक पर्वतसन्धे ॥ पादा, पर्यन्तपर्वता, "प्रत्यन्तपर्वता" द्वे उपगिरिलघुपर्वतानाम् ॥ गिरे बहिस्तिर्यक् निर्गता शूलाकारपाषाणप्रदेशा दन्तका, इति एकम् ॥१००॥ अधित्यका, एक पर्वतस्योर्ध्वभूमे ॥उपत्यका, एक पर्वतस्याधोभूमे ॥ स्नु (पु० न०), प्रस्थम् (पु० न०), सानु (पु० न० ), त्रीणि पर्वतस्य समभूभागस्य ॥ अश्मा (पु०), पाषाण, प्रस्तर, दृषत् दृषदौ दृषद (स्त्री०), ॥ १०१ ॥ ग्रावा (पु०), शिला, उपल (पु० न०), सप्त पाषाणस्य ॥ गिरे॰ च्युता पतिता स्थूलोपला गण्डशैला, इति एकम् "पर्वतमाथी पडिगयेल मोटा पत्थराओ इ० भा० ॥ आकर, खनि (स्त्री०), खानि (स्त्री०), "खानी" गञ्जा (पु० स्त्री०), ॥ चत्वारि आकरस्य "खाण" इ० भा० ॥ धातु ( पु० ), गैरिकम्, द्वे गैरिकस्य

हिरण्यनाभो मैनाकः सुनाभश्च तदात्मजः ।
रजताद्रिस्तु कैलासोऽष्टापदः स्फटिकाचलः ॥ ९४ ॥
क्रौञ्चः क्रुञ्चोऽथ मलय आपाढो दक्षिणाचलः ।
स्यान्माल्यवान् प्रस्रवणो विन्ध्यस्तु जलवालकः ॥९५॥
शत्रुञ्जयो विमलाद्रिरिन्द्रकीलस्तु मन्दरः ।
सुवेलः स्यात्त्रिमुकुटस्त्रिकूटस्त्रिककुच सः ॥ ९६ ॥
उज्जयन्तो रैवतकः सुदारुः पारियात्रिकः ।
लोकालोकश्चक्रवालोऽथ मेरुः कर्णिकाचलः ॥ ९७ ॥
रत्नसानुः सुमेरुः स्वःस्वर्गिकाञ्चनतो गिरिः ।

---

उदय , पूर्वाद्रि , द्वे उदयाचलस्य ॥ चरमाद्रि , अस्त , द्वे अस्ताचलस्य ॥ उदगद्रि , अद्रिराट , मेनकाप्राणेश , हिमवान्, हिमालय , हिमप्रस्थ , भवानीगुरु , सप्त हिमालयस्य ॥९३॥ हिरण्यनाभ , मैनाक , सुनाभ , त्रीणि हिमालयात्मजस्य मैनाकपर्वतस्य ॥ रजताद्रि , कैलास , अष्टापद , स्फटिकाचल , चत्वारि कैलासपर्वतस्य [ धनदावास , हराद्रि , हिमवद्धस ] ॥ ९४ ॥ क्रौञ्च , क्रुञ्च , "क्रौञ्ज" द्वे क्रौञ्चपर्वतस्य ॥ मलय (पु० न० ), आपाढ , दक्षिणाचल , त्रीणि मलयपर्वतस्य [ चन्दनगिरि ] ॥ माल्यवान्, प्रस्रवण , द्वे माल्यवत ॥ विन्ध्य , जलवालक , द्वे विन्ध्यपर्वतस्य ॥ ९५ ॥ शत्रुञ्जय , विमलाद्रि , द्वे शत्रुञ्जयपर्वतस्य ॥ इन्द्रकील , मन्दर , द्वे मन्दराचलस्य ॥सुवेल , त्रिमुकुट , त्रिकूट , त्रिककुद्, चत्वारि त्रिकूटाचलस्य ॥ ९६ ॥ उज्जयन्त , रैवतक , द्वे रैवतकपर्वतस्य "गिरनार" इ० भा० ॥ सुदारु , पारियात्रिक , द्वे पारियात्रिकपर्वतस्य ॥ लोकालोक , चक्रवाल , द्वे लोकालोकपर्वतस्य ॥ मेरु , कर्णिकाचल , ॥ ९७ ॥ रत्नसानु , सुमेरु , स्वर्-स्वर्गि-काञ्चनशब्देभ्य परो गिरिशब्दः प्रयोज्य । यथा—स्वर्गिरि , स्वर्गिगिरि , काञ्चनगिरि , सप्त मेरुपर्वतस्य ॥

वध्रं स्वर्णारियोगेष्टे यवनेष्टं सुवर्णकम् ॥ १०७ ॥
वङ्गं त्रपु स्वर्णजनागजीवने
मृद्वङ्गरङ्गे गुरुपत्रपिच्चटे ।
स्याच्चक्रसंज्ञं तमरं च नागजं
कस्तीरमालीनकसिंहले अपि ॥ १०८ ॥
स्याद्रूप्यं कलधौततारजतश्वेतानि दुर्वर्णकम्
खर्जूरं च हिमांशुहंसकुमुदाभिख्यं सुवर्णं पुनः ।
स्वर्णं हेमहिरण्यहाटकवसून्यष्टापदं काञ्चनम्
कल्याणं कनकं महारजतरैगाङ्गेयरुक्माण्यपि ॥१०९॥
कलधौतलोहोत्तमवह्निबीजा-
न्यपि गारुडं गैरिकजातरूपे ।

सुवर्णकम्, एकादश सीसस्य [ महायलम्, चीनपट्टम्, समोलुकम्, कृष्णम्, त्रपुबन्धकम् ] "सीसु" इ० भा० ॥ १०७ ॥ वङ्गम्, त्रपु, स्वर्णजम्, नागजीवनम्, मृद्वङ्गम्, रङ्गम्, गुरुपत्रम्, पिच्चटम्, चक्रसंज्ञम्, तमरम्, नागजम्, कस्तीरम्, आलीनम्, सिंहलम्, चतुर्दश वङ्गस्य [ श्वेतरूप्यम्, शण्ठम्, सल्वणम्, रज., परासम्, मधुकम्, त्रेप्तम्, घनम्, सुखभूषणम् ] "कलई" इ० भा० ॥ १०८ ॥ रूप्यम्, कलधौतम्, तारम्, रजतम् ( पु० न० ), श्वेतम्, "सितम्" दुर्वर्णम्, खर्जूरम्, हिमांशुहंसकुमुदाना अभिख्या यस्य तद् यथा—चन्द्राह्वयम्, हंसाह्वयम्, कुमुदाह्वयम्, दश रूप्यस्य [ त्रापुषम्, वङ्गजीवनम, वसु, भीरुकम्, श्वभ्रम्, सौम्यम, साध्यम्, रूप्रम्, भीरु, जवीयसम् ] ॥ सुवर्णम्, स्वर्णम्, हेम, "हेमम्, हेम" हिरण्यम् ( पु० न० ), हाटकम् ( पु० न० ), वसु, अष्टापदम् ( पु० न० ), काञ्चनम्, कल्याणम्, कनकम्, महारजतम्, रै[1] ( पु० स्त्री० ), गाङ्गेयम्, रुक्मम्, ॥ १०९ ॥ कलधौतम्, लोहोत्तमम्,

१ ऐकारान्तो रैशब्द ॥ रायौ राय ।

शुक्लधातौ पाकशुक्ला कठिनी खटिनी खटी ।
लोह कालायसं शस्त्रं पिण्डं पारशव घनम् ॥ १०३ ॥
गिरिसार शिलासारं तीक्ष्णकृष्णामिषे अय• ।
सिंहानधूर्तमण्डूरसरणान्यस्य किट्टके ॥ १०४ ॥
सर्वं च तैजसं लोहं विकारस्त्वयसः कुशी ।
ताम्र म्लेच्छमुख शुल्वं रक्तं द्व्यष्टमुदुम्बरम् ॥ १०५ ॥
म्लेच्छशावरभेदाख्यं मर्कटास्यं कनीयसम् ।
ब्रह्मवर्धनं वरिष्ठं सीसं तु सीसपत्रकम् ॥ १०६ ॥
नाग गण्डूपदभवं वप्रं सिन्दूरकारणम् ।

"सोनागेरु" इ० भा० ॥ १०२ ॥ शुक्लधातु , पाकशुक्ला, कठिनी, खटिनी, खटी, "करखटी" पञ्च शुक्लधातो ॥ लोहम् (पु० न०), कालायसम्, "कृष्णायसम्" शस्त्रम्, पिण्डम्, पारशवम्, (पु० न० ), घनम्, ॥१०३॥ गिरिसारम् ( पु० न० ), शिलासारम् (पु० न०), तीक्ष्णम्, कृष्णामिषम्, अय (न०), एकादश लोहस्य [ धीनम्, धीवरम् ] "लोढु" इ० भा० ॥ सिंहानम्, "सिंहाणम्" धूर्तम्, मण्डूरम्, सरणम्, चत्वारि लोहकिट्टकस्य ॥ १०४ ॥ सर्वं सुवर्णरजतादि तैजसम् लोहम् ( पु० न० ), "लौहम्" एक स्वर्णादिसर्वधातूनाम् ॥ अयसो लोहस्य विकार कुशी ( स्त्री० ), एक फालस्य ॥ ताम्रम्, म्लेच्छमुखम्, शुल्वम्, रक्तम्, द्व्यष्टम्, "द्विष्टम्" उदुम्बरम्, "औदुम्बरम्" ॥ १०५ ॥ म्लेच्छम्, शावरम्, मर्कटास्यम्, कनीयसम्, ब्रह्मवर्धनम्, वरिष्ठम्, द्वादश ताम्रस्य [ पवित्रम्, कास्यम् ] "तांबु" इ० भा० ॥ सीसम् ( पु० न० ), सीसपत्रकम्, ॥ १०६ ॥ नागम्, गण्डूपदभवम्, वप्रम्, सिन्दूरकारणम्, वर्ध्मम् ( पु० न० ), स्वर्णारि , योगेष्टम्, यवनेष्टम्,

१ यदुक्तम्—"सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु । सीसं च भीवरं चैव अष्टौ लोहानि चक्षते" ॥ १ ॥

कांस्ये विद्युत्प्रियं घोषः प्रकाशं वङ्गशुल्वजम् ।
घण्टाशब्दमसुराह्व रवण लोहजं मलम् ॥ ११५ ॥
सौराष्ट्रके पञ्चलोहं वर्तलोह तु वर्तकम् ।
पारदः पारतः सूतो हरबीज रसश्चलः ॥ ११६ ॥
अभ्रक स्वच्छपत्र खमेघाख्यं गिरिजामले ।
स्रोतोऽञ्जनं तु कापोतं सौवीर कृष्णयामुने ॥ ११७ ॥
अथ तुत्थ शिखिग्रीवं तुत्थाञ्जनमयूरके ।
मूषातुत्थ कांस्यनील हेमतारं वितुन्नकम् ॥ ११८ ॥
स्यात्तु कर्परिकातुत्थममृतासङ्गमञ्जनम् ।
रसगर्भं तार्क्ष्यशैल तुत्थे दार्वीरसोद्भवे ॥ ११९ ॥

---

अष्टौ हेमसनिभपित्तलस्य ॥ ब्राह्मी, राज्ञी, कपिला, ब्रह्मरीति, महेश्वरी, पञ्च पीतरक्तपित्तलस्य ॥११४॥ कांस्यम्, विद्युत्प्रियम्, घोष, प्रकाशम्, वङ्गशुल्वजम्, घण्टाशब्दम्, असुराह्वम्—कसमित्यर्थ, रवणम्, लोहजम्, मलम्, दश कांस्यस्य ॥ ११५ ॥ सौराष्ट्रकम्, पञ्चलोहम्, द्वे ताम्ररीतित्रपुसीसककालायसधातुमिश्रणस्य ॥ वर्तलोहम्, वर्तकम्, द्वे लोहविशेषस्य ॥ पारद (पु० न०), पारत (पु० न०), सूत, हरबीजम्, रस, चल, "चपल" पद पारदस्य "पारो" इ० भा० ॥ ११६ ॥ अभ्रकम्, स्वच्छपत्रम्, ख मेघशब्दाभ्या पर आख्यशब्द प्रयोज्य । यथा—खाख्यम्, मेघाख्यम्, गिरिजामलम्, "गिरिजम्, अमलम्" पञ्च अभ्रकस्य ॥ स्रोतोञ्जनम्, कापोतम्, सौवीरम्, कृष्णम्, यामुनम्, पञ्च सौवीरस्य "सुरमो" इ० भा० ॥११७॥ तुत्थम्, शिखिग्रीवम्, तुत्थाञ्जनम्, मयूरकम्, चत्वारि मयूरकस्य "मोरथुथु" इ० भा० ॥ मूषातुत्थम्, कांस्यनीलम्, हेमतारम्, वितुन्नकम्, चत्वारि मूषातुत्थस्य "भुरो मोरथुथु" इ० भा० ॥ ११८ ॥ कर्परिकातुत्थम्, अमृतासङ्गम्, अञ्जनम्, त्रीणि कर्परिकातुत्थस्य "खापरिआ" इ० भा० ॥ रसगर्भम्, तार्क्ष्यशैलम्, द्वे दारुहरिद्राकाथोद्भवतुत्थस्य

तपनीयचामीकरचन्द्रभर्मा-
र्जुननिष्ककार्तस्वरकर्बुराणि ॥ ११० ॥
जाम्बूनदं शातकुम्भं रजतं भूरि भूत्तमम् ।
हिरण्यकोशाकुप्यानि हेम्नि रूप्ये कृताकृते ॥ १११ ॥
कुप्यं तु तद्वयादन्यद्रूप्य तद्वयमाहतम् ।
अलंकारसुवर्णं तु शृङ्गीकनकमायुधम् ॥ ११२ ॥
रजतं च सुवर्णं च संश्लिष्टे घनगोलकः ।
पित्तलारेऽथारकूटः कपिलोहं सुवर्णकम् ॥ ११३ ॥
रिरी रीरी च रीतिश्च पीतलोह सुलोहकम् ।
ब्राह्मी तु राज्ञी कपिला ब्रह्मरीतिर्महेश्वरी ॥ ११४ ॥

---

वह्निबीजम्, गारुडम्, गैरिकम्, जातरूपम्, तपनीयम्, चामीकरम्, चन्द्र (पु० न०), भर्म, अर्जुनम्, निष्क (पु० न०), कार्तस्वरम्, कर्बुरम्, ॥ ११० ॥ जाम्बूनदम्, शातकुम्भम्, "शातकौम्भम्" रजतम्, भूरि (पु० न०), भूत्तमम्, त्रयस्त्रिंशत् सुवर्णस्य [ लोभनम्, शुभ्रम्, नारजीवनम्, ओजसम्, दाक्षायणम्, रक्तवर्णम्, श्रीमकुम्भम्, शिलोद्भवम्, वैणवम्, कर्णिकारच्छायम्, वेणुभटीभवम् ] ॥ हिरण्यम्, कोशम् (पु०न०), "कोष" अकुप्यम्, त्रीणि घटिताघटितहेमरूप्ययो ॥१११ ॥ तद्द्वयात् हेमरूप्याभ्याम् अन्यत् ताम्रादि कुप्यम्, एकं ताम्रादिधातूनाम् ॥ द्वयं कुप्यम् अकुप्य च यत् आहतं मुद्रितं तत् रूप्यम्, इति एकम् "नाणु" इ० भा० ॥ अलङ्कारसुवर्णम्, शृङ्गीकनकम्, "शृङ्गी" आयुधम्, त्रीणि अलङ्कारहेतुकस्य सुवर्णस्य ॥११२॥ घनगोलक (पु०न०), एकं संश्लिष्टसुवर्णरजतयो "एकठु करेल सोनुं-रुपु" इ०भा० ॥ पित्तला (स्त्री०न०), आर (पु०न०), द्वे पित्तलस्य ॥ आरकूट (पु०न०), कपिलोहम्, सुवर्णकम्, ॥ ११३ ॥ रिरी (स्त्री०), रीरी (स्त्री०), रीति, "रीती" पीतलोहम्, सुलोहम्,

कांस्ये विद्युत्प्रियं घोषः प्रकाशं वङ्गशुल्वजम् ।
घण्टाशब्दमसुराह्वं रवणं लोहजं मलम् ॥ ११५ ॥
सौराष्ट्रके पञ्चलोहं वर्तलोहं तु वर्तकम् ।
पारदः पारतः सूतो हरबीजं रसश्चलः ॥ ११६ ॥
अभ्रकं स्वच्छपत्रं खमेघाख्यं गिरिजामले ।
स्रोतोऽञ्जनं तु कापोतं सौवीरं कृष्णयामुने ॥ ११७ ॥
अथ तुत्थं शिखिग्रीवं तुत्थाञ्जनमयूरके ।
मूषातुत्थं कांस्यनीलं हेमतारं वितुन्नकम् ॥ ११८ ॥
स्यात्तु कर्परिकातुत्थममृतासङ्गमञ्जनम् ।
रसगर्भं तार्क्ष्यशैलं तुत्थे दार्वीरसोद्भवे ॥ ११९ ॥

---

अष्टौ हेमसन्निभपित्तलस्य ॥ ब्राह्मी, राज्ञी, कपिला, ब्रह्मरीतिः, महेश्वरी, पञ्च पीतरक्तपित्तलस्य ॥११४॥ कांस्यम्, विद्युत्प्रियम्, घोषः, प्रकाशम्, वङ्गशुल्वजम्, घण्टाशब्दम्, असुराह्वम्—कसमित्यर्थः, रवणम्, लोहजम्, मलम्, दश कांस्यस्य ॥ ११५ ॥ सौराष्ट्रकम्, पञ्चलोहम्, द्वे ताम्ररीतित्रपुसीसककालायसधातुमिश्रणस्य ॥ वर्तलोहम्, वर्तकम्, द्वे लोहविशेषस्य ॥ पारद (पु० न०), पारत (पु० न०), सूत, हरबीजम्, रस, चल, "चपल" पदं पारदस्य "पारो" इ० भा० ॥ ११६ ॥ अभ्रकम्, स्वच्छपत्रम्, ख मेघशब्दाभ्यां परं आख्यशब्दं प्रयोज्यं । यथा—खाख्यम्, मेघाख्यम्, गिरिजामलम्, "गिरिजम्, अमलम्" पञ्च अभ्रकस्य ॥ स्रोतोऽञ्जनम्, कापोतम्, सौवीरम्, कृष्णम्, यामुनम्, पञ्च सौवीरस्य "सुरमो" इ० भा० ॥११७॥ तुत्थम्, शिखिग्रीवम्, तुत्थाञ्जनम्, मयूरकम्, चत्वारि मयूरकस्य "मोरथुथु" इ० भा० ॥ मूषातुत्थम्, कांस्यनीलम्, हेमतारम्, वितुन्नकम्, चत्वारि मूषातुत्थस्य "भुरो मोरथुथु" इ० भा० ॥ ११८ ॥ कर्परिकातुत्थम्, अमृतासङ्गम्, अञ्जनम्, त्रीणि कर्परिकातुत्थस्य "खापरिआ" इ० भा० ॥ रसगर्भम्, तार्क्ष्यशैलम्, द्वे दारुहरिद्राक्वाथोद्भवतुत्थस्य

पुष्पाञ्जनं रीतिपुष्पं पौष्पकं पुष्पकेतु च ।
माक्षिकं तु कदम्बः स्याचक्रनामाऽजनामकः ॥ १२० ॥
ताप्यो नदीजः कामारिस्ताराविंटमाक्षिकः ।
सौराष्ट्री पार्वती काक्षी कालिका पर्पटी सती ॥१२१॥
आढकी तुवरी कंसोद्भवा काच्छी मृदाह्वया ।
कासीसं धातुकासीस खेचरं धातुशेखरम् ॥ १२२ ॥
द्वितीय पुष्पकासीसं कंसकं नयनौषधम् ।
गन्धाश्मा शुल्वपामाकुष्ठारिर्गन्धिकगन्धकौ ॥१२३॥
सौगन्धिकः शुकपुच्छो हरितालं तु पिञ्जरम् ।
बिडालक विस्रगन्धि खर्जूरं वंशपत्रकम् ॥ १२४ ॥

"रसवती" इ० भा० ॥ ११९ ॥ पुष्पाञ्जनम्, रीतिपुष्पम्, पौष्पकम् "पुष्पकम्" पुष्पकेतु, चत्वारि पुष्पाञ्जनस्य "खापरिआ-फुल" इ०भा० ॥ माक्षिकम्, कदम्ब, चक्रनामा, अजस्य विष्णो' नाम यस्य सः—अजनामक, चत्वारि माक्षिकस्य [ वैष्णवः ] ॥१२०॥ ताप्य, नदीज, कामारि, तारारि, विटमाक्षिक, पञ्च ताप्यस्य "हीराकशी" इ० भा० ॥ सौराष्ट्री, पर्वते भवा—पार्वती, काक्षी, कालिका, पर्पटी, सती, ॥ १२१ ॥ आढकी, तुवरी, कंसोद्भवा, काच्छी, मृदः मृत्तिकाया आह्वय यस्याः सा—मृदा-ह्वया, एकादश पर्पट्या "फटकडी" इ० भा० ॥ कासीसम्, धातुकासीसम्, खेचरम्, धातुशेखरम्, चत्वारि कासीसस्य "राती हिराकस" इ० भा० ॥ १२२ ॥ पुष्पकासीसम्, कसकम्, नयनौषधम्, त्रीणि कसकस्य "एकप्रकारनी हिराकस" इ० भा०॥ गन्धाश्मा, शुल्व—पामा—कुष्ठशब्देभ्य पर अरिशब्द प्रयोज्यः । यथा—शुल्वारि, पामारि, कुष्ठारि, गन्धिक, गन्धक, ॥१२३॥ सौगन्धिक, शुकपुच्छ, अष्टौ गन्धकस्य ॥ हरितालम्, पिञ्जरम्,

१ अत मृत्तिका, मृत्स्ना, मृत्सा अपि पपट्या नामानि । एवम् अन्यत्रापि यत्र आह्वयादिवाचकाः शब्दाः तत्रापि एवमूह्यम् ॥

आलपीतनतालानि गोदन्तं नटमण्डनम् ।
वङ्गारिलोमहृच्चाऽथ मनोगुप्ता मनःशिला ॥ १२५ ॥
करवीरा नागमाता रोचनी रसनेत्रिका ।
नेपाली कुनटी गोला मनोह्वा नागजिह्विका ॥ १२६ ॥
सिन्दूरं नागजं नागरक्तं शृङ्गारभूषणम् ।
चीनपिष्टं हसपादकुरुविन्दे तु हिङ्गुलः ॥ १२७ ॥
शिलाजतु स्याद्गिरिजमर्थ्यं गैरेयमश्मजम् ।
क्षारः काचः कुलाली तु स्याच्चक्षुष्या कुलत्थिका १२८
बोलो गन्धरसः प्राणः पिण्डो गोपरसः शशः ।
रत्नं वसु मणिस्तत्र वैडूर्यं वालवायजम् ॥ १२९ ॥

---

विडालकम्, विस्रगन्धि, खर्जूरम, वशपत्रकम्, ॥१२४॥ आलम्, पीतनम्, तालम्, गोदन्तम्, "गोपित्तम्" नटमण्डनम्, वङ्गारि, लोमहृद्, त्रयोदश हरितालस्य ॥ मनोगुप्ता, मन शिला, "मन शिल" ॥ १२५ ॥ करवीरा, नागमाता, रोचनी, रसनेत्रिका, नेपाली, "नैपाली" कुनटी, गोला, मनोह्वा, नागजिह्विका, एकादश मन शिलाया "मणशील" इ० भा० ॥१२६॥ सिन्दूरम्, नागजम्, नागरक्तम्, शृङ्गारभूषणम्, "शृङ्गारम्" चीनपिष्टम्, पञ्च सिन्दूरस्य ॥ हसपाद, कुरुविन्दम्, हिङ्गुल (पु० न०), "हिंङ्गुलु" त्रीणि हिङ्गुलस्य "हिंगळो" इ० भा० ॥ १२७ ॥ शिलाजतु, गिरिजम्, अर्थ्यम्, गैरेयम्, अश्मजम्, पञ्च शिलाजतुन "शिलाजीत" इ० भा० ॥ क्षार, काच, द्वे क्षारस्य "काचलवण" इ० भा० ॥ कुलाली, चक्षुषे हिता–चक्षुष्या, कुलत्थिका, त्रीणि कुलाल्या "काळो सुरमो" इ० भा० ॥ १२८ ॥ बोल, गन्धरस, प्राण, पिण्ड, गोपरस, "गोप, रस" शश, षट् बोलस्य "रातो बोळ" इ० भा० ॥ रत्नम्, वसु, मणि (पु०स्त्री०),

---

१ "हीरक मौक्तिक स्वर्ण रजत चन्दनानि च । शङ्खश्च च वस्त्र चेलष्टौ रत्नस्य जातय" ॥ १ ॥

पुष्पाञ्जनं रीतिपुष्पं पौष्पकं पुष्पकेतु च ।
माक्षिकं तु कदम्बः स्याच्चक्रनामाऽजनामकः ॥ १२० ॥
ताप्यो नदीजः कामारिस्तारारिर्विटमाक्षिकः ।
सौराष्ट्री पार्वती काक्षी कालिका पर्पटी सती ॥१२१॥
आढकी तुवरी कसोद्भवा काच्छी मृदाह्वया ।
कासीसं धातुकासीस खेचरं धातुशेखरम् ॥ १२२ ॥
द्वितीय पुष्पकासीसं कंसकं नयनौषधम् ।
गन्धाश्मा शुल्वपामाकुष्ठारिर्गन्धिकगन्धकौ ॥१२३॥
सौगन्धिकः शुकपुच्छो हरिताल तु पिञ्जरम् ।
बिडालकं विस्रगन्धि खर्जूरं वंशपत्रकम् ॥ १२४ ॥

"रसवती" इ० भा० ॥ ११९ ॥ पुष्पाञ्जनम्, रीतिपुष्पम्, पौष्पकम् "पुष्पकम्" पुष्पकेतु, चत्वारि पुष्पाञ्जनस्य "खापरिआ-फुल" इ०भा० ॥ माक्षिकम्, कदम्ब, चक्रनामा, अजस्य विष्णो' नाम यस्य स.—अजनामक, चत्वारि माक्षिकस्य [ वैष्णवः ] ॥१२०॥ ताप्य, नदीज, कामारि, तारारि, विटमाक्षिक, पञ्च ताप्यस्य "हीराकशी" इ० भा० ॥ सौराष्ट्री, पर्वते भवा—पार्वती, काक्षी, कालिका, पर्पटी, सती, ॥ १२१ ॥ आढकी, तुवरी, कसोद्भवा, काच्छी, मृदः मृत्तिकाया आह्वय यस्याः सा—मृदाह्वया, एकादश पर्पट्या "फटकडी" इ० भा० ॥ कासीसम्, धातुकासीसम्, खेचरम्, धातुशेखरम्, चत्वारि कासीसस्य "राती हिराकस" इ० भा० ॥ १२२ ॥ पुष्पकासीसम्, कसकम्, नयनौषधम्, त्रीणि कसकस्य "एकप्रकारनी हिराकस" इ० भा०॥ गन्धाश्मा, शुल्व—पामा—कुष्ठशब्देभ्य पर अरिशब्द प्रयोज्य । यथा—शुल्वारि, पामारि, कुष्ठारि, गन्धिक, गन्धक, ॥१२३॥ सौगन्धिक, शुकपुच्छ., अष्टौ गन्धकस्य ॥ हरितालम्, पिञ्जरम्,

१ अत मृत्तिका, सुराष्ट्रा, सुरसा अपि पर्पट्या नामानि । एवम् अन्य त्रापि यत्र आह्वयादिवाचका शब्दा तत्रापि एवमूह्यम् ॥

नीरं वारि जलं दकं कमुदकं पानीयमम्भः कुशम् ।
तोयं जीवनजीवनीयसलिलार्णांस्यम्बु वाः सवरम् ॥
क्षीरं पुष्करमेघपुष्पकमलान्यापः पयःपाथसी
कीलालं भुवनं वनं घनरसो यादोनिवासोऽमृतम् १३५
कुलीनस कबन्धं च प्राणदं सर्वतोमुखम् ।
अस्थाघास्थागमस्ताघमगाधं चातलस्पृशि ॥ १३६ ॥
निम्न गभीर गम्भीरमुत्तान तद्विलक्षणम् ।

---

प्रत्येकमेकैकम् ॥ आभ्यामन्यौ भिन्नवर्णौ इमौ खस्फटिकौ आकाशस्फटिकौ, सूर्यकान्तचन्द्रकान्तौ ज्ञेयौ ॥ शुक्तिजम्, मौक्तिकम्, मुक्ता, मुक्ताफलम्, रसोद्भवम्, पञ्च मौक्तिकस्य "मोति" इ० भा० ॥ १३४ ॥ इति पृथ्वीकायः समाप्तः ॥ अथ अप्कायमाह,— नीरम्, "नारम्" वारि, "वारम्" जलम्, दकम्, कम्, उदकम्, पानीयम्, अम्भ (न०), कुशम्, तोयम्, जीवनम्, जीवनीयम्, सलिलम्, "सरिलम्" अर्ण (न०), अम्बु, वा (स्त्री० न०), सवरम्, "शवरम्" क्षीरम्, पुष्करम्, मेघपुष्पम्, कमलम्, आप (स्त्री० व०), पय (न०), पाथ (न०), कीलालम्, भुवनम्, वनम्, घनरस (पु० न०), यादोनिवास, अमृतम्, ॥ १३५ ॥ कुलीनसम्, कबन्धम्, "कमन्धम्, कम्, अन्धम्" प्राणदम्, सर्वतोमुखम्, चतुस्त्रिंशन्नामानि जलस्य [जले दिव्यमिरासेव्य कृपीट घृतमङ्कुरम् । विष पिप्पलपातालसलिलानि च कम्वलम् ॥ १ ॥ पावन पङ्कस पापि वङ्कर तुसित पय । किट्टिम तदतिक्षार सालुक पङ्कगन्धिकम् ॥ २ ॥ अन्ध तु कलुष तोयमतिस्वच्छ तु काचिमम् ॥] अस्थाघम्, अस्थागम्, अस्ताघम्, अगाधम्, अतलस्पृक्, पञ्चापि वाच्यलिङ्गा पञ्च अगाधस्य जलस्य "ऊडु" इ० भा० ॥ १३६ ॥ निम्नम्, गभीरम्, गम्भीरम्, त्रीणि गभीरस्य । अस्थाघादयो गम्भीरान्ता एकार्था इत्यन्ये ॥ उत्तानम्, एक गम्भीरविपरीतस्य ॥ अच्छम्, प्रसन्नम्,

मरकत त्वश्मगर्भं गारुत्मतं हरिन्मणिः ।
पद्मरागो लोहितकलक्ष्मीपुष्पाऽरुणोपलाः ॥ १३० ॥
नीलमणिस्त्विन्द्रनीलः सूचीमुखं तु हीरकः ।
वरारक रत्नमुख्य वज्रपर्यायनाम च ॥ १३१ ॥
विराटजो राजपट्टो राजावर्तोऽथ विद्रुमः ।
रक्ताङ्को रक्तकन्दश्च प्रवालं हेमकन्दलः ॥ १३२ ॥
सूर्यकान्तः सूर्यमणिः सूर्याश्मा दहनोपलः ।
चन्द्रकान्तश्चन्द्रमणिश्चान्द्रश्चन्द्रोपलश्च स. ॥ १३३ ॥
क्षीरतैलस्फटिकाभ्यामन्यौ खस्फटिकाविमौ ।
शुक्तिज मौक्तिक मुक्ता मुक्ताफलं रसोद्भवम् ॥१३४॥

---

"माणिक्यम्" त्रीणि रत्नस्य ॥ वैडूर्यम्, "वैदूर्यम्" वालवायजम्, द्वे वैडूर्यरत्नस्य ॥ १२९ ॥ मरकतम्, अश्मगर्भम्, गारुत्मतम्, हरिन्मणि, चत्वारि मरकतस्य ॥ "लीलो मणि" इ० भा० ॥ पद्मराग (पु० न०), लोहितक, लक्ष्मीपुष्पम्, अरुणोपल, चत्वारि पद्मरागस्य [ शोणरत्नम् ] "माणेक" इ० भा० ॥ १३० ॥ नीलमणि, इन्द्र-नील ( पु० न० ), द्वे नीलमणे ॥ सूचीमुखम्, मनो हरतीति –हीरक ( पु० न० ), वरारकम्, रत्नमुख्यम्, वज्रपर्यायनाम, पञ्च हीरकस्य "हीरो" इ० भा० ॥१३१॥ विराटज, "वैराट" राजपट्ट, राजावर्त, त्रीणि वैराटस्य॥ विद्रुम, रक्ताङ्क, रक्तकन्द, प्रवालम् (पु० न०), हेमकन्दल, पञ्च प्रवालस्य "परवाळु" इ० भा० ॥१३२॥ सूर्यकान्त, सूर्यमणि, सूर्याश्मा, दहनोपल, चत्वारि सूर्यकान्तस्य ॥ चन्द्रकान्त, चन्द्रमणि, चान्द्र, चन्द्रोपल, चत्वारि चन्द्रकान्तस्य ॥ १३३ ॥ क्षीर–तैलशब्दाभ्या स्फटिकशब्द प्रयोज्य । यथा–क्षीरस्फटिक, तैलस्फटिक,

---

१ "स्फटिकास्तु त्रयस्तेषामाकाशस्फटिको वर । द्वौ क्षीरतैलस्फटिकावाका-शस्फटिकस्तु ॥१॥ द्वौ भेदौ सूर्यकान्तश्च चन्द्रकान्तश्च तत्र च" ॥ इति वाच स्पति ॥

गोधा निहाका गौधेरगौधारौ दुष्टतत्सुते ।
गौधेयोऽन्यत्र मुसली गोधिकागोलिके गृहात् ॥३६३॥
माणिक्या भित्तिका पल्ली कुड्यमत्स्यो गृहोलिका ।
स्यादञ्जनाधिका हालिन्यञ्जनिका हलाहल ॥ ३६४ ॥
स्थूलाञ्जनाधिकाया तु ब्राह्मणी रक्तपुच्छिका ।
कृकलासस्तु सरटः प्रतिसूर्यः शयानकः ॥ ३६५ ॥
मूषिको मूषको वज्रदशन० खनकोन्दुरौ ।
उन्दुरुर्वृष आखुश्च सूच्यास्यो वृषलोचने ॥ ३६६ ॥
छुछुन्दरी गन्धमुष्या गिरिका बालमूषिका ॥
विडाल ओतुर्मार्जारो ह्वीकुश्च वृषदशकः ॥ ३६७ ॥

रोमशलाकायाः "सिसोलियु" इ० भा० ॥ ३६२ ॥ गोधा, (स्त्री० ), निहाका ( स्त्री० ), एतौ नरजातावपि स्त्रीलिङ्गौ द्वे गोधाया "घो" इ० भा० ॥ गौधेर , गौधार , द्वे दुष्टस्य गोधापत्यस्य ॥ गौधेय , एक गोधापत्यस्य ॥ मुसली, "मुशली" गृहशब्दात् गोधिका गोलिका च प्रयुज्येत—गृहगोधिका, गृहगोलिका, ॥ ३६३ ॥ माणिक्या, भित्तिका, पल्ली, कुड्यमत्स्य , गृहोलिका, अष्टौ पल्ल्या "गरोळी" इ० भा० ॥ अञ्जनाधिका, हालिनी, अञ्जनिका, हलाहल , चत्वारि गृहोलिकाभेदस्य "आजणी" इ० भा० ॥ ३६४ ॥ ब्राह्मणी, रक्तपुच्छिका, द्वे स्थूलाञ्जनाधिकाया ॥ कृकलास , "कृकलाश , कृकुलास " सरट , प्रतिसूर्य , शयानक , "प्रतिसूर्ये शेते—प्रतिसूर्यशयानक " षत्वारि सरटस्य "काकिडो" इ० भा० ॥ ३६५ ॥ मूषिक ( पु० न० ), मूषक , "मुषक " वज्रदशन , खनक , उन्दुर , उन्दुरु , "उन्दु " वृष , आखु ( पु० स्त्री० ), सूच्यास्य , वृषलोचन , दश उन्दुरस्य ॥ ३६६ ॥ छुछुन्दरी, गन्धमुषी, द्वे छुछुन्दर्या ॥ गिरिका, बालमूषिका, द्वे अल्पमूषकजाते ॥ विडाल , "विडालः" ओतुः (पु०), मार्जार , ह्वीकु (पु०), वृषदशकः, पञ्च

जाहको गात्रसंकोची मण्डली नकुलः पुनः ।
पिङ्गलः सर्पहा बभ्रुः सर्पोऽहिः पवनाशनः ॥ ३६८ ॥
भोगी भुजङ्गभुजगावुरगो द्विजिह्व-
व्यालौ भुजङ्गमसरीसृपदीर्घजिह्वाः ।
काकोदरो विषधरः फणभृत्पृदाकु-
र्दृक्कर्णकुण्डलिविलेशयदन्दशूकाः ॥ ३६९ ॥
दर्वीकरः कञ्चुकिचक्रिगूढ-
पात्पन्नगा जिह्मगलेलिहानौ ।
कुम्भीनसाशीविषदीर्घपृष्ठाः
स्याद् राजसर्पस्तु भुजङ्गभोजी ॥ ३७० ॥
चक्रमण्डल्यजगरः पारीन्द्रो वाहसः शयुः ।

---

विडालस्य । तत्र खोक्कु वनमार्जारस्येत्यन्ये ॥३६७॥ जाहक , गात्र-सकोची, मण्डली (पु०), त्रीणि विडालविशेषस्य ॥ नकुल , पिङ्गल , सर्पान् हन्तीति–सर्पहा ( पु० ), बभ्रु ( पु० ), चत्वारि नकुलस्य "नोळिओ" इ० भा० ॥ सर्प , अहि (पु० स्त्री० ), पवनाशन , ॥ ३६८ ॥ भोगी, भुजङ्ग , भुजग , उरग , द्विजिह्व , व्याल , भुजङ्गम , सरीसृप , दीर्घजिह्व , काकोदर , विषधर , फणभृत् , पृदाकु , दृशावेव कर्णौ यस्य–दृक्कर्ण , "गोकर्ण " कुण्डली, विले-शय , दन्दशूक , ॥३६९॥ दर्वी फण एव करो यस्य––दर्वीकर , कञ्चुकी, चक्री, गूढपाद्, पन्नग , जिह्मग , भृश लेढीत्येवशील – लेलिहान , कुम्भी इव नासिका यस्य स –कुम्भीनस , आशी दंष्ट्रा तस्या विष यस्येति–आशीविष , "आशीर्विष " दीर्घपृष्ठ , त्रिंशन्ना-मानि सर्पस्य ॥ राजसर्प , भुजङ्गभोजी, "भुजगभोजी" द्वे राजसर्पस्य [ अहीरणी, द्विमुख , ] ॥ ३७० ॥ चक्रमण्डली, अजगर , पारीन्द्र , वाहस , अतिशय शेते–शयु ( पु० ), पञ्च अज-

**गोधा निहाका गौधेरगौधारौ दुष्टतत्सुते ।**
**गौधेयोऽन्यत्र मुसली गोधिकागोलिके गृहात् ॥३६३॥**
**माणिक्या भित्तिका पल्ली कुड्यमत्स्यो गृहोलिका ।**
**स्यादञ्जनाधिका हालिन्यञ्जनिका हलाहल. ॥ ३६४ ॥**
**स्थूलाञ्जनाधिकायां तु ब्राह्मणी रक्तपुच्छिका ।**
**कृकलासस्तु सरटः प्रतिसूर्यः शयानकः ॥ ३६५ ॥**
**मूषिको मूषको वज्रदशन. खनकोन्दुरौ ।**
**उन्दुरुर्वृष आखुश्च सूच्यास्यो वृषलोचने ॥ ३६६ ॥**
**छुछुन्दरी गन्धमुष्यां गिरिका बालमूषिका ॥**
**बिडाल ओतुर्मार्जारो हीकुश्च वृषदंशकः ॥ ३६७ ॥**

रोमशलाकायाः "सिसोळियु" इ० भा० ॥ ३६२ ॥ गोधा, (स्त्री०), निहाका (स्त्री०), एतौ नरजातावपि स्त्रीलिङ्गौ द्वे गोधाया "घो" इ० भा० ॥ गौधेर , गौधार , द्वे दुष्टस्य गोधापत्यस्य ॥ गौधेय , एक गोधापत्यस्य ॥ मुसली, "मुशली" गृहशब्दात् गोधिका गोलिका च प्रयुज्येत—गृहगोधिका, गृहगोलिका, ॥ ३६३ ॥ माणिक्या, भित्तिका, पल्ली, कुड्यमत्स्य , गृहोलिका, अष्टौ पल्ल्या "गरोळी" इ० भा० ॥ अञ्जनाधिका, हालिनी, अञ्जनिका, हलाहल , चत्वारि गृहोलिकाभेदस्य "आजणी" इ० भा० ॥ ३६४ ॥ ब्राह्मणी, रक्तपुच्छिका, द्वे स्थूलाञ्जनाधिकाया ॥ कृकलास , "कृकलाश , क्रकुलास " सरट , प्रतिसूर्य , शयानक , "प्रतिसूर्य शेते—प्रतिसूर्यशयानक " चत्वारि सरटस्य "काकिडो" इ० भा० ॥ ३६५ ॥ मूषिक (पु० न० ), मूषक , "मुषक " वज्रदशन , खनक , उन्दुर , उन्दुरु , "उन्दु " वृष , आखु (पु० स्त्री० ), सूच्यास्य , वृषलोचन , दश उन्दुरस्य ॥ ३६६ ॥ छुछुन्दरी, गन्धमुषी, द्वे छुछुन्दर्या ॥ गिरिका, बालमूषिका, द्वे अल्पमूषकजाते ॥ बिडाल , "विडालः" ओतुः (पु०), मार्जार , हीकु (पु०), वृषदंशक , पञ्च

अथ कम्बलाश्वतरधृतराष्ट्रबलाहकाः ।
इत्यादयोऽपरे नागास्तत्तत्कुलसमुद्भवाः ॥ ३७७ ॥
निर्मुक्तो मुक्तनिर्मोकः सविषा निर्विषाश्च ते ।
नागाः स्युर्दृग्विषा लूमविषास्तु वृश्चिकादयः ॥३७८॥
व्याघ्रादयो लोमविषा नखविषा नरादयः ।
लालाविषास्तु लूताद्याः कालान्तरविषाः पुनः ॥३७९॥
मूषिकाद्या दूषीविषं त्ववीर्यमौषधादिभिः ।
कृत्रिमं तु विषं चार गरश्चोपविषं च तत् ॥ ३८० ॥
भोगोऽहिकायो दंष्ट्राशीर्दर्वी भोगः फटः स्फटः[1] ।

धूमौ ताभ्यां समा प्रभा यस्य सः ज्वालाधूमसमप्रभः अर्धचन्द्रमौलिः कुलिकः, एकं कुलिकनागस्य ॥ ३७६ ॥ कम्बलः, अश्वतरः, धृतराष्ट्रः, बलाहकः, चतुर्णां नागानामेकैकम् ॥ इत्यादयः अपरे अन्ये तत्तत्कुलसमुद्भवाः नागाः सन्ति । आदिशब्दात् महानीलादयः "महानीलः कुहारश्च पुष्पदन्तश्च दुर्मुखः । कपिलो वामनः शङ्कुरोमा च करवीरकः ॥१॥ एलापत्रः शुक्तिकर्णहस्तिभद्रधनंजयाः । दधिमुखः समानासोत्तसको दधिपूरणः ॥२॥ हारिद्रको दधिकर्णो मणिः शृङ्गारपिण्डकः । कालियः शङ्खकूटश्च चित्रकः शङ्खचूडकः ॥३॥" इत्यादि ॥३७७॥ निर्मुक्तः, मुक्तनिर्मोकः, द्वे त्यक्तकञ्चुकस्य सर्पस्य ॥ ते सर्पाः द्विविधाः सविषाः नागादयः । निर्विषाः अजगरादयः । दृष्टिविषाः नागाः सन्ति । लूमविषाः पुच्छविषाः वृश्चिकादयः सन्ति ॥३७८॥ लोमविषाः व्याघ्रादयः भवन्ति । नखविषाः नरादयो भवन्ति । लालाविषाः लूताद्याः भवन्ति । कालान्तरविषाः मूषिकाद्याः भवन्ति ॥ ३७९ ॥ औषधादिभिः औषधमन्त्रादिभिः अवीर्यम् वीर्यरहितीकृतं विषं दूषीविषम्, इति एकम् ॥ चारम्, गरः, उपविषम्, त्रीणि कृत्रिमविषस्य ॥ ३८० ॥ भोगः, एकं सर्पशरीरस्य ॥ आशीः, "आशी" एकम् सर्पदंष्ट्रायाः ॥ दर्वी,

1 आशी आशिषो आशिष ।

अलगर्दो जलव्यालः समौ राजिलडुन्डुभौ ॥ ३७१ ॥
भवेत् तिलित्सो गोनासो गोनसो घोणसोऽपि च ।
कुक्कुटाहिः कुक्कुटाभो वर्णेन च रवेण च ॥ ३७२ ॥
नागाः पुनः काद्रवेयास्तेषां भोगावती पुरी ।
शेषो नागाधिपोऽनन्तो द्विसहस्राक्ष आलुकः॥३७३॥
स च श्यामोऽथवा शुक्लः सितपङ्कजलाञ्छनः ।
वासुकिस्तु सर्पराजः श्वेतो नीलसरोजवान् ॥ ३७४ ॥
तक्षकस्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः ।
महापद्मस्त्वतिशुक्लो दशबिन्दुकमस्तकः ॥ ३७५ ॥
शङ्खस्तु पीतो बिभ्राणो रेखामेन्दुसितां गले ।
कुलिकोऽर्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः ॥ ३७६ ॥

---

गरस्य ॥ अलगर्द , "अलगर्द्द" जलव्याल , द्वे जलसर्पस्य ॥ राजिल , "राजील," डुन्डुभ , "डुण्डुभ" द्वे निर्विषद्विमुखसर्पस्य ॥ ३७१ ॥ तिलित्स , गोनास , गोनस , घोणस , चत्वारि घोणसनामकसर्पभेदस्य ॥ य वर्णेन रवेण च कुक्कुटाभ कुक्कुटोपम स कुक्कुटाहि , इति एकम् ॥ ३७२ ॥ नागा , काद्रवेया , नागबाहुल्याद्बहुवचनम् द्वे देवयोनिविशेषाणा नागानाम् ॥ तेषा देवयोनिविशेषाणा नागाना पुरी भोगावती, एक नागपुर्या ॥ शेष , नागाधिप , अनन्त , द्विसहस्राक्ष , आलुक , पञ्च शेषनागस्य [ एककुण्डल ] ॥ ३७३ ॥ स शेषनाग श्याम शुक्लो वा श्वेतकमललाञ्छनो भवति ॥ वासुकि , सर्पराज , द्वे वासुके ॥ स वासुकि श्वेतवर्ण नीलोत्पललाञ्छनो भवति ॥ ३७४ ॥ लोहिताङ्ग रक्तवर्ण मस्तके स्वस्तिकलाञ्छन तक्षक , एकम् तक्षकनागस्य ॥ अतिश्वेतवर्ण मस्तके दशबिन्दुलाञ्छन महापद्म , एक महापद्मस्य ॥ ३७५ ॥ गले कण्ठे इन्दुसिता चन्द्रवदुज्ज्वला रेखा दधान पीतवर्ण शङ्ख , एक शङ्खनागस्य ॥ ज्वाला च धूमश्च ज्वाला-

अथ कम्बलाश्वतरधृतराष्ट्रबलाहकाः ।
इत्यादयोऽपरे नागास्तत्तत्कुलसमुद्भवाः ॥ ३७७ ॥
निर्मुक्तो मुक्तनिर्मोक सविषा निर्विषाश्च ते ।
नागाः स्युर्दृग्विषा लूमविषास्तु वृश्चिकादयः ॥३७८॥
व्याघ्रादयो लोमविषा नखविषा नरादयः ।
लालाविषास्तु लूताद्याः कालान्तरविषाः पुनः ॥३७९॥
मूषिकाद्या दूषीविषं त्ववीर्यमौषधादिभि ।
कृत्रिम तु विषं चार गरश्चोपविष च तत् ॥ ३८० ॥
भोगोऽहिकायो दंष्ट्राशीर्दर्वी भोगः फटः स्फटः ।

धूमौ ताभ्या समा प्रभा यस्य स ज्वालाधूमसमप्रभ अर्धचन्द्रमौलि कुलिक, एक कुलिकनागस्य ॥ ३७६ ॥ कम्बल, अश्वतर, धृतराष्ट्र, बलाहक, चतुर्णां नागानामेकैकम् ॥ इत्यादय अपरे अन्ये तत्तत्कुलसमुद्भवा नागा सन्ति । आदिशब्दात् महानीलादय "महानील कुहारश्च पुष्पदन्तश्च दुर्मुख । कपिलो वामन. शङ्कुरोमा च करवीरक ॥१॥ एलापत्र शुक्तिकर्णहस्तिभद्रधनजया । दधिमुख समानासोत्तसको दधिपूरण ॥२॥ हारिद्रको दधिकर्णो मणि शृङ्गारपिण्डक । कालिय शङ्खकूटश्च चित्रक शङ्खचूडक ॥३॥" इत्यादि ॥३७७॥ निमुक्त, मुक्तनिर्मोक, द्वे त्यक्तकञ्चुकस्य सर्पस्य ॥ ते सर्पा द्विविधा सविषा नागादय । निर्विषा अजगरादय । दृष्टिविषा नागा सन्ति । लूमविषा पुच्छविषा वृश्चिकादय सन्ति ॥३७८॥ लोमविषा व्याघ्रादय भवन्ति। नखविषा नरादयो भवन्ति । लालाविषा लूताद्या भवन्ति । कालान्तरविषा मूषिकाद्या भवन्ति ॥ ३७९ ॥ औषधादिभि औषधमन्त्रादिभि अवीर्यम् वीर्यरहितीकृत विष दूषीविषम्, इति एकम ॥ चारम्, गर, उपविषम्, त्रीणि कृत्रिमविषस्य ॥ ३८० ॥ भोग, एक सर्पशरीरस्य ॥ आशी, "आसी" एकम् सर्पदंष्ट्राया ॥ दर्वी,

१ आसी आशिषो आशिष ।

फणोऽहिकोशे तु निर्ल्वयनीनिर्मोककञ्चुकाः ॥ ३८१ ॥

॥ इति स्थलचराः पञ्चेन्द्रियाः ॥

विहगो विहङ्गमखगौ पतगो विहङ्गः
शकुनिः शकुन्तिशकुनौ विवयःशकुन्ताः ।
नभसङ्गमो विकिरपत्ररथौ विहायो
द्विजपक्षिविष्किरपतत्रिपतत्पतङ्गाः ॥ ३८२ ॥
पित्सन् नीडाण्डजो गौकाश्चञ्चुश्चञ्चूः सृपाटिका ।
त्रोटिश्च पत्रं पतत्रं पिच्छं वाजस्तनूरुहम् ॥ ३८३ ॥
पक्षो गरुच्छदश्चापि पक्षमूलं तु पक्षतिः ।

---

भोग, फट (पु० स्त्री०), स्फट (पु० स्त्री०), फण (त्रि०), पञ्च सर्पफणायाः ॥ अहिकोश, निर्ल्वयनी, "निर्लयनी" निर्मोक, कञ्चुक (पु० न०), चत्वारि कञ्चुकस्य "काचळी" इ० भा० ॥ ३८१ ॥ इति स्थलचराः पञ्चेन्द्रियाः ॥ अथ खचरा नाह—विहायसा गच्छति–विहग, विहगम, खग, पतग, विहङ्ग, शकुनि (पु०), शकुन्ति (पु०), शकुन, वेति गच्छतीति–वि, वय (न०), शकुन्त, नभसगम, विकिर, पत्राणि पक्षा रथो यस्य—पत्ररथ, विहाया, द्वाभ्यां मातृगर्भाण्डाभ्यां जात–द्विज, पक्षी, विष्किर, पतत्री, "पतत्रि" पतत्, पतङ्ग, ॥ ३८२ ॥ पतितुमिच्छति पित्सतीति–पित्सन्, नीडादण्डाच्च परो जातशब्द —नीडज, अण्डज, अगो वृक्ष ओको यस्य स —अगौका, पञ्चविंशति पक्षिणः [ चञ्चुमान्, कण्ठाग्नि, कीकसमुख, लोमकी, रसनारद, वाजी, नाडीचरण, वाजी, ] ॥ चञ्चु, चञ्चू, सृपाटिका, त्रोटि, ( चञ्च्वादयश्चत्वारः स्त्री० ) चत्वारि चञ्च्वा "चांच" इ० भा० ॥ पत्रम्, पतत्रम्, पिच्छम्, वाज, तनूरुहम्, "तनुरुहम्" ॥ ३८३ ॥ पक्ष, गरुत् (पु०न०),

---

१ अकारान्तो नभसशब्दोपि इत्यत्र नभःपर्यायः ॥

प्रडीनोड्डीनसण्डीनडयनानि नभोगतौ ॥ ३८४ ॥
पेशी कोशोऽण्डे कुलायो नीडे केकी तु सर्पभुक् ।
मयूरबर्हिणौ नीलकण्ठो मेघसुहृच्छिखी ॥ ३८५ ॥
शुक्लापाङ्गोऽस्य वाक् केका पिच्छ बर्हं शिखण्डकः ।
प्रचलाकः कलापश्च मेचकश्चन्द्रकः समौ ॥ ३८६ ॥
वनप्रिय. परभृतस्ताम्राक्षः कोकिलः पिकः ।
कलकण्ठः काकपुष्ट. काकोऽरिष्टः सकृत्प्रजः ॥३८७॥

---

छद (पु० न०), अष्टौ पक्षस्य ॥ पक्षति (स्त्री०), "पक्षती" एक पक्षमूलस्य ॥ प्रडीनम्, उड्डीनम्, सडीनम्, डयनम्, चत्वारि पक्षिणो गते ॥ तत्र प्रडीन तिर्यग्गमनम् । उड्डीनम् उर्ध्वगमनम् । सडीनम् सगत गमनम् इति भेदो बोध्य ॥ ३८४ ॥ पेशीकोश, "पेशी, पेशि, कोश, कोष" अण्डम् (पु० न०), द्वे अण्डस्य "ईडुं" इ० भा० ॥ कुलाय, नीड (त्रि०), द्वे पक्षिगृहस्य "पखीनो माळो" इ० भा० ॥ केकी, सर्पभुक्, मयूर, बर्हिण, नीलकण्ठ, मेघसुहृद्, शिखी, ॥ ३८५ ॥ शुक्लापाङ्ग, अष्टौ मयूरस्य [ चित्रपिङ्गल, नृत्यप्रिय, स्थिरमद, खिलखिङ्ग, गरुव्रत, मार्जारकण्ठ, मरुक, मेघनादानुलासक, मयूक, बहुलग्रीव, नगावास, चन्द्रकी, ] ॥ अस्य मयूरस्य वाक् केका, एक मयूरवाण्या ॥ पिच्छम्, बर्हम् (पु० न०), शिखण्डक, प्रचलाक, कलाप, पञ्च मयूरपिच्छस्य ॥ मेचक, चन्द्रक, द्वे मयूरपिच्छस्य-नेत्राकारचिह्नस्य ॥३८६॥ वनप्रिय, परभृत, ताम्राक्ष, कोकिल[1], पिक, कलकण्ठ, काकपुष्ट, सप्त कोकिलस्य [ मदोल्लापी, काकजात, रक्तोद्भद, मधुघोष, मधुकण्ठ, सुधाकण्ठ, कुहूमुख, घोपयित्नु, पोपयित्नु, कामताल, कुनालिक, ] ॥ काक, अरिष्ट,

---

1 स्त्रियाम् कोकिला ।

**आत्मघोषश्चिरजीवी घूकारिः करटो द्विकः ।**
**एकदृग्बलिभुग्ध्वाङ्क्षोमौकुलिर्वायसोऽन्यभृत्॥३८८॥**
**वृद्धद्रोणदग्धकृष्णपर्वतेभ्यस्त्वसौ परः ।**
**वनाश्रयस्तु काकोलो मद्गुस्तु जलवायसः ॥ ३८९ ॥**
**घूके निशाटः काकारिः कौशिकोलूकपेचका ।**
**दिवान्धोऽथ निशावेदी कुक्कुटश्चरणायुधः ॥ ३९० ॥**
**कृकवाकुस्ताम्रचूडो विवृताक्ष. शिखण्डिकः ।**
**हसाश्चक्राङ्गवक्राङ्गमानसौक.सितच्छदाः ॥ ३९१ ॥**
**राजहसास्त्वमी चञ्चुचरणैरतिलोहितैः ।**

सकृदेकवार प्रजा यस्य—सकृत्प्रज , ॥ ३८७ ॥ आत्मन स्वनाम्न काका इति घोषो यस्य—आत्मघोष , चिरजीवी, घूकारि , करट , द्वौ ककारौ यस्य स'—द्विक , एकदृक्, बलिभुक्, ध्वाङ्क्ष , मौकुलि , वायस , अन्यान् पिकान् बिभर्ति—अन्यभृत्, चतुर्दश काकस्य ॥३८८॥ वृद्ध-द्रोण-दग्ध-कृष्ण पर्वतशब्देभ्य पर असौ काकशब्द प्रयोज्य —वृद्धकाक , द्रोणकाक , "द्रोण " दग्धकाक , कृष्णकाक , पर्वतकाक ; वनाश्रय , काकोल , सप्त कृष्णकाकस्य ॥ मद्गु , जलवायस , द्वे जलकाकस्य ॥ ३८९ ॥ घूक , निशायामटति—निशाट , काकारि , कौशिक , उलूक , पेचक , दिवान्ध , सप्त घूकस्य "घुवड" इ० भा० ॥ निशा वेदयति बोधयति—निशावेदी, कुक्कुट (पु० न०), चरणायुध , ॥३९०॥ कृकेण शिरोग्रीवेण वक्तीति—कृकवाकु , ताम्रचूड , विवृताक्ष , शिखण्डिक , सप्त कुक्कुटस्य [ दीर्घनाद , चर्मचूड , नखायुध , मयूरचटक , शौण्ड , रणेच्छुः, कलाधिक , आरणी, विष्किर , बोधि , नन्दीक , पुष्टिवर्धन , चित्रवाज , महायोगी, स्वस्तिक , मणिकण्ठक', उषाकील', विशोक , ग्राज , ग्रामकुक्कुट , ] "कुकडो" इ० भा० ॥ 'हस', चक्राङ्ग , वक्राङ्ग , मानसौका , सितच्छद , पञ्च हसस्य [मराल ] ॥ ३९१ ॥ अतिलोहितै चञ्चुचरणै अमी हसा राजहसा ,

मल्लिकाक्षास्तु मलिनैर्धार्तराष्ट्राः सितेतरैः ॥ ३९२ ॥
कादम्बास्तु कलहंसाः पक्षैः स्युरतिधूसरैः
वारला वरला हंसी वारटा वरटा च सा ॥ ३९३ ॥
दार्वाघाटः शतपत्रः खञ्जरीटस्तु खञ्जनः ।
सारसस्तु लक्ष्मणः स्यात्पुष्कराख्यः कुरङ्कुरः ॥ ३९४ ॥
सारसी लक्ष्मणाऽथ क्रुङ् क्रौञ्चे चाषे किकीदिविः ।
चातकः स्तोककौ बप्पीह सारङ्गो नभोऽम्बुप' ॥३९५॥
चक्रवाको रथाङ्गाह्वः कोको द्वन्द्वचरोऽपि च ।
टिट्टिभस्तु कटुकाण उत्पादशयनश्च सः ॥ ३९६ ॥
चटको गृहबलिभुक् कलविङ्कः कुलिङ्ककः ।

---

इति एकम् ॥ मलिनै चञ्चुचरणै हंसा मल्लिकाक्षा, इति एकम् ॥ सितेतरै, कृष्णै चञ्चुचरणै हंसा धार्तराष्ट्रा, इति एकम् ॥३९२॥ अतिधूसरै, पक्षै हंसा कादम्बा, कलहंसा, द्वे कलहंसानाम् ॥ वारला, वरला, हंसी, वारटा, वरटा, पञ्च हंस्या ॥ ३९३ ॥ दार्वाघाट, शतपत्र, द्वे दार्वाघाटस्य "एकठकुटपक्षी" ॥ इ० भा० ॥ खञ्जरीट, खञ्जन, द्वे खञ्जरीटपक्षिण ॥ सारस लक्ष्मण, पुष्करस्य पद्मस्य आख्या यस्य–पुष्कराख्य, कुरङ्कुर., चत्वारि सारसपक्षिण [ दीर्घजानुक, गोनर्दी, मैथुनी, कामी; श्येनाख्य, रक्तमस्तक ,] ॥३९४॥ सारसी, लक्ष्मणा, "लक्ष्मणी" द्वे सारस्या ॥ क्रुङ्, क्रौञ्च, "क्रुञ्चा" द्वे क्रौञ्चपक्षिण ॥ चाष, "चास" किकीदिवि, "किकिदिवि, किकिदिव, किकीदिवी", किकीदिव, किकि, किकी, दिव, दिवि" द्वे चापपक्षिण ॥ चातक, स्तोकक, वप्पीह, सारङ्ग, नभोऽम्बुप, पञ्च चातकस्य ॥ ३९५ ॥ चक्र इति वाक् नाम यस्य–चक्रवाक, रथाङ्गाह्व; तेन चक्र रथाङ्ग इत्यादि कोक, द्वन्द्वचर, चत्वारि चक्रवाकप- क्षिण ॥ टिट्टिभ, "टीटिभ" कटुकाण, उत्पादशयन, त्रीणि टिट्टिभस्य "टिटोडी" इ० भा० ॥ ३९६ ॥ चटक, गृहबलिभुर्

योषित्तु तस्य चटका ऽयपत्ये चटका तयोः ॥ ३९७ ॥
पुमपत्ये चाटकैरो दात्यूहे कालकण्टकः ।
जलरङ्कुर्जलरञ्जो बके कह्वो बकोटवत् ॥ ३९८ ॥
बलाह्कः स्याद्बलाको बलाका विसकण्ठिका ॥
भृङ्गः कलिङ्गो धूम्याटः कङ्कस्तु कमनच्छदः ॥ ३९९ ॥
लोहपृष्ठो दीर्घपादः कर्कटः स्कन्धमल्लक ।
चिल्ल शकुनिरातापी श्येनः पत्री शशादनः ॥४००॥
दाक्षाय्यो दूरदृग् गृध्रोऽथोत्क्रोशो मत्स्यनाशनः ।
कुररः कीरस्तु शुको रक्ततुण्ड फलादनः ॥ ४०१ ॥

कलविङ्क, कुलिङ्कक, "कुलिङ्ग" चत्वारि चटकस्य "चकलो" इ० भा०॥ तस्य चटकस्य योषित् चटका, एक चटकाया ॥ तयो चटकस्य चटकाया वा अपत्य स्त्री चटका, इति एकम् ॥ ३९७ ॥ चटकस्य चटकाया वा अपत्य पुमान्—चाटकैर, इत्येकम् ॥ दात्यूह, "दात्योह" कालकण्टक, जलरङ्कु, जलरञ्ज, चत्वारि जलरङ्कुपक्षिण । जलकाकस्येत्यन्ये ॥ बक, कह्व, बकोट, त्रीणि बकस्य "बगलो" इ० भा० ॥३९८॥ वारीणा वाहक —बलाहक, बलाक, द्वे बलाहकपक्षिण ॥ बलाका, विसकण्ठिका, "विसकण्टिका, बकेरुका" द्वे बलाकाया ॥ भृङ्ग, कलिङ्ग, धूम्याट, त्रीणि कलिङ्गपक्षिण ॥ कङ्क, कमनच्छद, ॥ ३९९ ॥ लोहपृष्ठ, दीर्घपाद, कर्कट, स्कन्धमल्लक, पञ्च कङ्कपक्षिण ॥ चिल्ल, शकुनि, आतापी, त्रीणि चिल्लपक्षिण "समळी" इ० भा० ॥ श्येन, पत्री, शशादन, त्रीणि श्येनपक्षिण "बाजपक्षी" इ० भा० ॥ ४०० ॥ दाक्षाय्य, दूरदृग्, गृध्र, त्रीणि गृध्रपक्षिण [ पुरुषव्याघ्र, कामायु, कुणितेक्षण, सुदर्शन, शकुनि, ] "गीध" इ० भा० ॥ उत्क्रोश, मत्स्यनाशन, कुरर, त्रीणि कुररपक्षिण ॥ कीर, शुक, रक्ततुण्ड, फलादन, चत्वारि शुकस्य [ प्रियदर्शन, श्रीमान्, मेधातिथि, मेधावी, वाग्मी, ] "पोपट" इ० भा०॥४०१॥

शारिका तु पीतपादा गोराटी गोकिराटिका ।
स्याच्चर्मचटकायां तु जतुकाऽजिनपत्रिका ॥ ४०२ ॥
वल्गुलिका मुखविष्ठा परोष्णी तैलपायिका ।
कर्करेटुः करेटुः स्यात्करटुः कर्कराटुकः ॥ ४०३ ॥
आटिरातिः शरारिः स्यात्कृकणक्रकरौ समौ ।
भासे शकुन्तः कोयष्टौ शिखरी जलकुक्कुभः ॥४०४॥
पारापतः कलरवः कपोतो रक्तलोचनः ।
ज्योत्स्नाप्रिये चलचञ्चुचकोरविपसूचकाः ॥ ४०५ ॥
जीवंजीवस्तु गुन्द्रालो विपदर्शनमृत्युकः ।
व्याघ्राटस्तु भरद्वाजः ल्पवस्तु गात्रसप्लवः ॥ ४०६ ॥

---

शारिका, पीतपादा, गोराटी, गोकिराटिका, चत्वारि शारिकाया "मैना" इ० भा० ॥ चर्मचटका, जतुका, अजिनपत्रिका, त्रीणि चर्मचटकाया "चामाचिडियु" इ० भा० ॥ ४०२ ॥ वल्गुलिका, मुखविष्ठा, परं विरुद्धमुष्णं तेजो यस्या –परोष्णी, तैलपायिका, चत्वारि वल्गुलिकाया [ निशाटनी ] "वटवागुळ" इ० भा० ॥ कर्करेटु, करेटु, करटु, कर्कराटु, (चत्वार पु०) चत्वारि करटुपक्षिण "केरवा" इ० भा० ॥ ४०३ ॥ आटि "आटी, आडी, आडि" आति, शरारि, "शरालि, शराली, शराटि, शराडि" (सर्वे स्त्री०) त्रीणि शरारे "आढि" इ० भा० ॥ कृकण, क्रकर, द्वे क्रकरस्य ॥ भास, शकुन्त, द्वे शकुन्तपक्षिण ॥ कोयष्टि (पु०), शिखरी, जलकुक्कुभ, त्रीणि जलचरपक्षिविशेषस्य "कोसीटा" इ० भा० ॥ ४०४ ॥ पारापत, "पारावत" कलरव, कपोत, रक्तलोचन, चत्वारि पारापतस्य "पारेवा" इ० भा० ॥ ज्योत्स्नाप्रिय, चलचञ्चु, चकोर, विपसूचक, चत्वारि चकोरपक्षिण ॥ ४०५ ॥ जीवंजीव, गुन्द्राल, विपदर्शनमृत्युक, त्रीणि मयूरसदृशचित्रपक्षपक्षिविशेषस्य ॥ व्या-

योपित्तु तस्य चटका ह्यपत्ये चटका तयोः ॥ ३९७ ॥
पुमपत्ये चाटकैरो दात्यूहे कालकण्टकः ।
जलरङ्कुर्जलरङ्को बके कह्वो वकोटवत् ॥ ३९८ ॥
वलाहकः स्याद्वलाको बलाका विसकण्ठिका ॥
भृङ्गः कलिङ्गो धूम्याटः कङ्कस्तु कमनच्छदः ॥ ३९९ ॥
लोहपृष्ठो दीर्घपादः कर्कटः स्कन्धमल्लक ।
चिल्लः शकुनिरातापी श्येनः पत्री शशादनः ॥४००॥
दाक्षाय्यो दूरदृग् गृध्रोऽथोत्क्रोशो मत्स्यनाशनः ।
कुररः कीरस्तु शुको रक्ततुण्डः फलादनः ॥ ४०१ ॥

कलविङ्क, कुलिङ्कक, "कुलिङ्ग" चत्वारि चटकस्य "चकलो" इ० भा०॥ तस्य चटकस्य योपित् चटका, एक चटकाया ॥ तयो चटकस्य चटकाया वा अपत्य स्त्री चटका, इति एकम् ॥ ३९७ ॥ चटकस्य चटकाया वा अपत्य पुमान्—चाटकैर, इत्येकम् ॥ दात्यूह, "दात्योह" कालकण्टक, जलरङ्कु, जलरञ्ज, चत्वारि जलरङ्कुपक्षिण । जलकाकस्येत्यन्ये ॥ बक, कह्व, वकोट, त्रीणि बकस्य "बगलो" इ० भा० ॥३९८॥ वारीणा वाहक —वलाहक, वलाक, द्वे वलाहकपक्षिण ॥ बलाका, विसकण्ठिका, "विसकण्ठिका, बकेरुका" द्वे बलाकाया ॥ भृङ्ग, कलिङ्ग, धूम्याट, त्रीणि कलिङ्गपक्षिण ॥ कङ्क, कमनच्छद, ॥ ३९९ ॥ लोहपृष्ठ, दीर्घपाद, कर्कट, स्कन्धमल्लक, पञ्च कङ्कपक्षिण ॥ चिल्ल, शकुनि, आतापी, त्रीणि चिल्लपक्षिण "समळी" इ० भा० ॥ श्येन, पत्री, शशादन, त्रीणि श्येनपक्षिण "बाजपक्षी" इ० भा० ॥ ४०० ॥ दाक्षाय्य, दूरदृग्, गृध्र, त्रीणि गृध्रपक्षिण [ पुरुपव्याघ्र, कामायु, कूणितेक्षण, सुदर्शन, शकुनि, ] "गीध" इ० भा० ॥ उत्क्रोश, मत्स्यनाशन, कुरर, त्रीणि कुररपक्षिण ॥ कीर, शुक, रक्ततुण्ड, फलादन, चत्वारि शुकस्य [ प्रियदर्शन, श्रीमान्, मेधातिथि, मेधावी, वाग्मी, ] "पोपट" इ०भा०॥४०१॥

शकुले स्यात्कलकोऽथ गडकः शकुलार्भकः ॥४११॥
उलूपी शिशुके प्रोष्ठी शफरः श्वेतकोलके ।
नलमीनश्चिलिचिमो मत्स्यराजस्तु रोहितः ॥ ४१२ ॥
मद्गुरस्तु राजशृङ्गः शृङ्गी तु मद्गुरप्रिया ।
क्षुद्राण्डमत्स्यजातं तु पोताधानं जलाणुकम् ॥४१३॥
महामत्स्यास्तु चीरिल्लितिमिङ्गिलगिलादयः ।
अथ यादांसि नक्राद्या हिंसका जलजन्तवः ॥४१४॥
नक्रः कुम्भीर आलास्यः कुम्भी महामुखोऽपि च ।
तालुजिह्वः शङ्खमुखो गोमुखो जलसूकरः ॥ ४१५ ॥
शिशुमारस्त्वम्बुकूर्म उष्णवीर्यो महावसः ।
उद्रस्तु जलमार्जारः पानीयनकुलो वसी ॥ ४१६ ॥

---

शकुल , कलक , द्वे शकुलमत्स्यस्य ॥ गडक , "गण्डक" शकुलार्भक , द्वे गडकमत्स्यस्य ॥ ४११ ॥ उलूपी (पु०), शिशुक , द्वे शिशुमाराकारमत्स्यस्य ॥ प्रोष्ठी ( स्त्री० ), शफर ( पु० स्त्री० ), श्वेतकोलक , त्रीणि श्वेतमत्स्यविशेषस्य ॥ नलमीन , चिलिचिम , "चिलिचिमि" द्वे शुषिरतृणान्तश्चरमत्स्यस्य ॥ मत्स्यराज , रोहित', द्वे मत्स्यराजस्य ॥ ४१२ ॥ मद्गुर , राजशृङ्ग , द्वे मद्गुरमत्स्यस्य ॥ शृङ्गी, एक मद्गुरस्त्रिया ॥ पोताधानम् , जलाणुकम् , द्वे अण्डज क्षुद्रमत्स्यसंघातस्य ॥ ४१३ ॥ महामत्स्य , चीरिल्लि , तिमिंगिलगिल , त्रीणि महामत्स्यस्य । आदिशब्दात् नन्द्यावर्तादयोपि बोध्या ॥ याद ( न० ), जलजन्तु ( पु० ), द्वे सामान्येन जलचरमात्रस्य ॥ तत्र नक्राद्या हिंसका तानाह—॥ ४१४ ॥ नक्र , कुम्भीर , आलास्य , कुम्भी ( पु० ), महामुख , तालुजिह्व , शङ्खमुख , गोमुख , जलसूकर , नव नक्रस्य "मगर" इ० भा० ॥ ४१५ ॥ शिशुमार , अम्बुकूर्म , उष्णवीर्य , महावस , चत्वारि शिशुमारस्य "सुसुआर" इ० भा० ॥ उद्र , ज-

तित्तिरिस्तु खरकोणो हारीतस्तु मृदङ्कुरः ।
कारण्डवस्तु मरुलः सुगृहश्चञ्चुसूचिकः ॥ ४०७ ॥
कुम्भकारकुक्कुटस्तु कुकुभः कुहकस्वनः ।
पक्षिणा येन गृह्यन्ते पक्षिणोऽन्ये स दीपकः ॥४०८॥
छेका गृह्याश्च ते गेहासक्ता ये मृगपक्षिणः ।
। इति खचराः पञ्चेन्द्रियाः ।
मत्स्यो मीनः पृथुरोमा झषो वैसारिणोऽण्डजः ॥४०९॥
सङ्घचारी स्थिरजिह्व आत्माशी स्वकुलक्षयः ।
विसारः शकली शल्की शंवरोऽनिमिषस्तिमिः॥४१०॥
सहस्रदंष्ट्रे वादालः पाठीने चित्रवल्लिकः ।

---

घाट , भरद्वाज , द्वे भरद्वाजपक्षिण ॥ प्लव , गात्रसप्लव , द्वे प्लवपक्षिण ॥ ४०६ ॥ तित्तिरि , खरकोण , द्वे तित्तिरे "तेतर" इ० भा० ॥ हारीत , मृदङ्कुर , द्वे हारीतपक्षिण ॥ कारण्डव , मरुल , द्वे कारण्डवपक्षिण "बतक" इ० भा० ॥ सुगृह , चञ्चुसूचिक , द्वे सुगृहस्य "सुघरी" इ० भा० ॥ ४०७ ॥ कुम्भकारकुक्कुट , कुकुभ , कुहकस्वन , त्रीणि कुकुभपक्षिण ॥ येन पक्षिणा अन्ये पक्षिणो गृह्यन्ते स दीपक , एक श्येनसिंचकादे ॥४०८॥ ये मृगपक्षिण गेहासक्ता पञ्जरादौ स्थापितास्ते छेका , गृह्या , द्वे पञ्जरादिस्थापितमृगपक्षिणाम् ॥ इत्युक्ता खचरा ॥ मत्स्य , मीन , पृथुरोमा, झष , वैसारिण , अण्डज , ॥ ४०९ ॥ सघचारी, स्थिरजिह्व , आत्मान मत्स्यजातिमश्नातीति आत्माशी, स्वकुलक्षय , विसार , शकली, शल्की, शंवर , अनिमिष , तिमि (पु० ), षोडश नामानि सामान्येन मत्स्यस्य [ जलपिप्पिक , मूक , जलाशय , शेव ] ॥४१०॥ सहस्रदंष्ट्र , वादाल , द्वे सहस्रदंष्ट्रमत्स्यस्य [ पतन , जालवाल , वदाल ] ॥ पाठीन , चित्रवल्लिक , द्वे पाठीनमत्स्यस्य [ मृदुपाठक ] ॥

शकुले स्यात्कलकोऽथ गडकः शकुलार्भकः ॥४११॥
उलूपी शिशुके प्रोष्ठी शफरः श्वेतकोलके ।
नलमीनश्चिलिचिमो मत्स्यराजस्तु रोहितः ॥ ४१२ ॥
मद्गुरस्तु राजशृङ्गः शृङ्गी तु मद्गुरप्रिया ।
क्षुद्राण्डमत्स्यजातं तु पोताधानं जलाणुकम् ॥४१३॥
महामत्स्यास्तु चीरिल्लितिमिङ्गिलगिलादयः ।
अथ यादांसि नक्राद्या हिंसका जलजन्तवः ॥४१४॥
नक्रः कुम्भीर आलास्यः कुम्भी महामुखोऽपि च ।
तालुजिह्वः शङ्खमुखो गोमुखो जलसूकरः ॥ ४१५ ॥
शिशुमारस्त्वम्बुकूर्म उष्णवीर्यो महावसः ।
उद्रस्तु जलमार्जारः पानीयनकुलो वसी ॥ ४१६ ॥

---

शकुल, कलक, द्वे शकुलमत्स्यस्य ॥ गडक, "गण्डक" शकुलार्भक, द्वे गडकमत्स्यस्य ॥ ४११ ॥ उलूपी (पु०), शिशुक, द्वे शिशुमाराकारमत्स्यस्य ॥ प्रोष्ठी (स्त्री०), शफर (पु० स्त्री०), श्वेतकोलक, त्रीणि श्वेतमत्स्यविशेषस्य ॥ नलमीन, चिलिचिम, "चिलिचिमि" द्वे शुषिरतृणान्तश्चरमत्स्यस्य ॥ मत्स्यराज, रोहित', द्वे मत्स्यराजस्य ॥ ४१२ ॥ मद्गुर, राजशृङ्ग, द्वे मद्गुरमत्स्यस्य ॥ शृङ्गी, एकं मद्गुरस्त्रिया ॥ पोताधानम्, जलाणुकम्, द्वे अण्डज क्षुद्रमत्स्यसंघातस्य ॥ ४१३ ॥ महामत्स्य, चीरिल्लि, तिमिंगिलगिल, त्रीणि महामत्स्यस्य । आदिशब्दात् नन्द्यावर्तादयोपि बोध्या ॥ याद (न०), जलजन्तु (पु०), द्वे सामान्येन जलचरमात्रस्य ॥ तत्र नक्राद्या हिंसका तानाह—॥ ४१४ ॥ नक्र, कुम्भीर, आलास्य, कुम्भी (पु०), महामुख, तालुजिह्व, शङ्खमुख, गोमुख, जलसूकर, नव नक्रस्य "मगर" इ० भा० ॥ ४१५ ॥ शिशुमार, अम्बुकूर्म, उष्णवीर्य, महावस, चत्वारि शिशुमारस्य "सुसुआर" इ० भा० ॥ उद्र, ज-

ग्राहे तन्तुस्तन्तुनागोऽवहारो नागतन्तुणौ ।
अन्येऽपि यादोभेदाः स्युर्बहवो मकरादयः ॥ ४१७ ॥
कुलीरः कर्कटः पिङ्गचक्षुः पार्श्वोदरप्रियः ।
द्विधागतिः षोडशाङ्घ्रिः कुरचिल्लो बहिश्चरः ॥ ४१८ ॥
कच्छपः कमठः कूर्मः क्रोडपादश्चतुर्गतिः ।
पञ्चाङ्गगुप्तदौलेयौ जीवथः कच्छपी दुली ॥ ४१९ ॥
मण्डूके हरिशालूरप्लवभेकप्लवङ्गमाः ।
वर्षाभूः प्लवगः शालुरजिह्वव्यङ्गदर्दुराः ॥ ४२० ॥
स्थले नरादयो ये तु ते जले जलपूर्वकाः ।
अण्डजाः पक्षिसर्पाद्याः पोतजाः कुञ्जरादयः ॥४२१॥

---

लमार्जार , पानीयनकुल , वसी ( पु० ), चत्वारि जलमार्जारस्य ॥ ४१६ ॥ ग्राहः, तन्तुः (पु०), तन्तुनागः, अवहारः, नागः, तन्तुण , षट् ग्राहस्य [ चरणपाश ] ॥ मकरादय अन्येऽपि बहव यादोभेदा जलजन्तुप्रभेदाः सन्ति ॥ ४१७ ॥ कुलीर ( पु० न० ), "कुलिर" कर्कट , "करकट" पिङ्गचक्षुः, पार्श्वोदरप्रिय , द्विधा अग्रे पश्चाच्च गतिर्यस्य द्विधागति , षोडशाङ्घ्रि , कुरचिल्ल , जलात् बहिश्चरति बहिश्चर , अष्टौ कुलीरस्य "करचलो" इ० भा० ॥ ४१८ ॥ कच्छप , कमठ , कूर्मः, क्रोडपाद , चतुर्धा अग्रत पश्चात् पार्श्वयोश्च गतिर्यस्य चतुर्गतिः, पञ्चाङ्गगुप्त , दौलेयः, जीवथ , अष्टौ कूर्मस्य "काचबो" इ० भा० ॥ कच्छपी, दुली, द्वे कूर्मस्त्रियाः ॥ ४१९ ॥ मण्डूक , ह्रियते सर्पेण इति–हरि , शालूर , "सालूर" प्लव , भेक , प्लवगम , वर्षाभू (पु०), प्लवग , शालुः (पु०), अजिह्वः, व्यङ्गः, दर्दुरः, द्वादश मण्डूकस्य "डेडको" इ० भा० ॥४२०॥ ये स्थले नरादय ते जले जलपूर्वका स्युः यथा—जलनर जलहस्ती, जलतुरग , इत्यादि ॥ पक्षिसर्पाद्या अण्डजा भवन्ति ।

रसजा मद्यकीटाद्या नृगवाद्या जरायुजाः ।
यूकाद्याः स्वेदजा मत्स्यादयः संमूर्च्छनोद्भवाः ॥४२२॥
खञ्जनास्तूद्भिदोऽथोपपादुका देवनारकाः ।
त्रसयोनय इत्यष्टावुद्भिदुद्भिज्जमुद्भिदम् ॥ ४२३ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणिनाममालाया समाप्तस्तिर्यक्काण्डश्चतुर्थ ॥

---

कुक्षरादय पोतजा गर्भवेष्टनरहिता भवन्ति ॥ ४२१ ॥ मद्यकीटाद्या रसजा भवन्ति । आदिग्रहणात् घृतकीटादय । नृगवाद्या' जरायुजा गर्भवेष्टनसहिता भवन्ति । आद्यग्रहणात् महिपसूकरादय ॥ यूकादय स्वेदात् घर्माद् जायन्ते—स्वेदजा भवन्ति । मत्स्यादय समूर्च्छन गर्भोपपातव्यतिरेकेणैव य. प्राणिनामुत्पादस्तस्मादुद्भवो येषा ते समूर्च्छनोद्भवा सन्ति ॥ ४२२ ॥ खञ्जना इति बहुवचनात् खञ्जनादय शलभाद्या उद्भिद. उद्भिज्जा ज्ञेया । इति त्रसाना जीवाना योनय उत्पत्तिस्थानानि अष्टौ सन्ति ॥ उद्भिद्, उद्भिज्जम्, उद्भिदम्, त्रीणि उद्भिज्जस्य ॥ ४२३ ॥

इति परमार्हतकुमारपालभूपालप्रतिबोधककलिकालसर्वज्ञश्रीमद्धेमचन्द्राचार्यविरचिताभिधानचिन्तामणिनाममालाया (अपरनामहैमीकोशस्य) स्वोपज्ञतत्त्वाभिधायिनीवृत्त्यनुसारिणीरत्नप्रभाव्याख्याया चतुर्थस्तिर्यक्काण्ड ॥

ग्राहे तन्तुस्तन्तुनागोऽवहारो नागतन्तुणौ ।
अन्येऽपि यादोभेदाः स्युर्बहवो मकरादयः ॥ ४१७ ॥
कुलीरः कर्कटः पिङ्गचक्षुः पार्श्वोदरप्रियः ।
द्विधागतिः षोडशाङ्घ्रिः क्षुरचिल्लो बहिश्चरः ॥ ४१८ ॥
कच्छपः कमठः कूर्मः क्रोडपादश्चतुर्गतिः ।
पश्चाङ्गगुप्तदौलेयौ जीवथः कच्छपी दुली ॥ ४१९ ॥
मण्डूके हरिशालूरप्लवभेकप्लवङ्गमाः ।
वर्षाभूः प्लवगः शालुरजिह्वव्यङ्गदर्दुराः ॥ ४२० ॥
स्थले नराद्यो ये तु ते जले जलपूर्वकाः ।
अण्डजाः पक्षिसर्पाद्याः पोतजाः कुञ्जरादयः ॥४२१॥

---

लमार्जार, पानीयनकुल, वसी (पु०), चत्वारि जलमार्जारस्य ॥ ४१६ ॥ ग्राह', तन्तु' (पु०), तन्तुनाग, अवहार, नाग', तन्तुण, पट् ग्राहस्य [चरणपाश] ॥ मकराद्य अन्येऽपि बहव यादोभेदा जलजन्तुप्रभेदा सन्ति ॥ ४१७ ॥ कुलीर (पु० न०), "कुलिर" कर्कट, "करकट" पिङ्गचक्षु', पार्श्वोदरप्रिय, द्विधा अग्रे पश्चाच्च गतिर्यस्य द्विधागति, षोडशाङ्घ्रि, क्षुरचिल्ल, जलात् बहिश्चरति बहिश्चर, अष्टौ कुलीरस्य "करचलो" इ० भा० ॥ ४१८ ॥ कच्छप, कमठ, कूर्म', क्रोडपाद, चतुर्धा अग्रत पश्चात् पार्श्वयोश्च गतिर्यस्य चतुर्गति', पञ्चाङ्गगुप्त, दौलेय, जीवथ, अष्टौ कूर्मस्य "काचवो" इ० भा० ॥ कच्छपी, दुली, द्वे कूर्मस्त्रिया ॥ ४१९ ॥ मण्डूक, ह्रियते सर्पेण इति—हरि, शालूर, "सालूर" प्लव, भेक, प्लवगम, वर्षाभू (पु०), प्लवग, शालु (पु०), अजिह्व', व्यङ्ग', दर्दुर, द्वादश मण्डूकस्य "डेडको" इ० भा० ॥ ४२० ॥ ये स्थले नराद्य ते जले जलपूर्वका स्यु यथा—जलनर जलहस्ती, जलतुरग, इत्यादि ॥ पक्षिसर्पाद्या अण्डजा भवन्ति ।

**रसजा मद्यकीटाद्या नृगवाद्या जरायुजाः ।**
**यूकाद्याः स्वेदजा मत्स्यादयः सम्मूर्च्छनोद्भवाः ॥४२२॥**
**खञ्जनास्तूद्भिदोऽथोपपादुका देवनारकाः ।**
**त्रसयोनय इत्यष्टावुद्भिदुद्भिज्जमुद्भिदम् ॥ ४२३ ॥**

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणिनाममालाया समाप्तस्तिर्यक्काण्डश्चतुर्थ ॥

---

कुञ्जरादय पोतजा गर्भवेष्टनरहिता भवन्ति ॥ ४२१ ॥ मद्यकीटाद्या रसजा भवन्ति । आदिग्रहणात् घृतकीटादय । नृगवाद्याः जरायुजा गर्भवेष्टनसहिता भवन्ति । आद्यग्रहणात् महिषसूकरादय ॥ यूकादय स्वेदात् घर्माद् जायन्ते—स्वेदजा भवन्ति । मत्स्यादय सम्मूर्च्छन गर्भोपपातव्यतिरेकेणैव य, प्राणिनामुत्पादस्तस्मादुद्भवो येषा ते सम्मूर्च्छनोद्भवा सन्ति ॥ ४२२ ॥ खञ्जना इति बहुवचनात् खञ्जनादय, शलभाद्या उद्भिद, उद्भिज्जा ज्ञेया । इति त्रसाना जीवाना योनय उत्पत्तिस्थानानि अष्टौ सन्ति ॥ उद्भिद्, उद्भिज्जम्, उद्भिदम्, त्रीणि उद्भिज्जस्य ॥ ४२३ ॥

इति परमार्हतकुमारपालभूपालप्रतिबोधककलिकालसर्वज्ञश्रीमद्धेमचन्द्राचार्यविरचिताभिधानचिन्तामणिनाममालाया ( अपरनामहैमीकोशस्य ) स्वोपज्ञतत्त्वाभिधायिनीवृत्त्यनुसारिणीरत्नप्रभाव्याख्याया चतुर्थस्तिर्यक्काण्ड ॥

# अथ पञ्चमो नारककाण्डः ।

स्युर्नारकास्तु परेतप्रेतयात्यातिवाहिकाः ।
आजूर्विष्टिर्यातना तु कारणा तीव्रवेदना ॥ १ ॥
नरकस्तु नारकः स्यान्निरयो दुर्गतिश्च सः ।
घनोदधिघनवाततनुवातनभःस्थिताः ॥ २ ॥
रत्नशर्करावालुकापङ्कधूमतमःप्रभाः ।
महातमःप्रभा चेत्यधोऽधो नरकभूमयः ॥ ३ ॥
क्रमात्पृथुतराः सप्ताथ त्रिंशत् पञ्चविंशतिः ।

---

अथ पञ्चमो नारककाण्ड । नारक , "नारकिक , नैरयिक , नारकीय " परेत , प्रेत , यात्य , अतिवाहक , पञ्च नरकस्थितप्राणिन ॥ आजू ( स्त्री० ), विष्टि ( स्त्री० ), द्वे नरके हठात् प्रक्षेपस्य । भद्रारयकर्मकरणस्येत्यन्ये । निर्मूल्यकारणस्येत्यपरे ॥ यातना, कारणा, तीव्रवेदना, त्रीणि नरकदुःखस्य ॥ १ ॥ नरक , नारक , निरय , दुर्गति ( पु० स्त्री० ), चत्वारि नरकस्य ॥ घनोदधि , घनवात , तनुवात , नभ ( न० ), इति रत्नप्रभादीना सप्तानामपि पृथिवीना चतुर्णामाधाराणा प्रत्येकमेकैकम् ॥ २ ॥ रत्नप्रभा [ घर्मा ], शर्कराप्रभा [ वशा ], वालुकाप्रभा [ शैला ], पङ्कप्रभा [अञ्जना], धूमप्रभा [रिष्टा], तम प्रभा [ माघव्या ], महातम प्रभा "तमस्तम प्रभा" [ माघवी ], इति सप्ताना अधोऽध पृथुतराणा नरकभूमीना प्रत्येकमेकैकम् ॥ ३ ॥ रत्नप्रभाया नरकभूम्या सीमन्तरौद्रहाहारवघातनादय नरकावासा त्रिंशल्लक्षाणि भवन्ति । शर्कराप्रभाया नरकभूमौ स्तनितादय नरकावासा' पञ्चविंशतिर्लक्षाणि भवन्ति । वालुकाप्रभाया तप्तादयः

---

१ रत्नप्रभादीनि सप्तापि गोत्रशब्देन व्यवह्रियन्ते । [ घमा ] एतद्विहान्त र्गतानि सप्त नामशब्देन व्यपदिश्यन्ते जैनागमे । तत्राय विवेक । अनादि कालप्रसिद्ध अन्वर्थरहित—नाम । गोत्र तु सान्वर्थम् इति ॥

पञ्चदश दश त्रीणि लक्षाण्यूनं च पञ्चभिः ॥ ४ ॥
लक्षं पञ्च च नरकावासाः सीमन्तकादयः ।
एतासु स्युः क्रमेणाथ पातालं वडवामुखम् ॥ ५ ॥
बलिवेश्माधोभुवनं नागलोको रसातलम् ।
रन्ध्रं विलं निर्व्यथनं कुहरं शुषिरं शुषिः ॥ ६ ॥
छिद्रं रोपं विवरं च निम्नं रोकं वपान्तरम् ।
गर्तश्वभ्रावटागाधदरास्तु विवरे भुवः ॥ ७ ॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां समाप्तो नारककाण्डः पञ्चमः ॥

---

नरकावासाः पञ्चदश लक्षाणि भवन्ति । पङ्कप्रभायां दश लक्षाणि आरादयो नरकावासा भवन्ति । धूमप्रभायां त्रीणि लक्षाणि रसादादयो नरकवासा भवन्ति । तमःप्रभायां पञ्चोनमेकलक्षं हिमादयः नरकावासा भवन्ति ॥४॥ महातमःप्रभायां नरकभूमौ अप्रतिष्ठानादयो नरकवासाः पञ्चैव भवन्ति ॥ पातालम्, वडवामुखम् ॥५॥ बलिवेश्म, अधोभुवनम्, नागलोकः, रसातलम्, "रसा, तलम्" पदं पातालस्य ॥ रन्ध्रम्, विलम्, निर्व्यथनम्, कुहरम्, शुषिरम्, "सुषीरम्" शुषि (पु० स्त्री०), "सुषि" ॥ ६ ॥ छिद्रम्, रोपम्, विवरम्, निम्नम्, रोकम्, वपा, अन्तरम्, त्रयोदश नामानि रन्ध्रस्य ॥ गर्तः (पु० स्त्री०), श्वभ्रम्, अवटः, अगाधः, दरः (त्रि०), पञ्च भूमिविवरस्य "खाई" इ० भा० ॥ ७ ॥

इति परमार्हतकुमारपालभूपालप्रतिबोधककलिकालसर्वज्ञश्रीमद्धेमचन्द्राचार्यविनिर्मिताभिधानचिन्तामणिनाममालायाः (अपरनामहैमीकोशस्य) स्वोपज्ञतत्त्वाभिधायिनी वृत्त्यनुसारिणीरत्नप्रभाव्याख्याया पञ्चमो नारककाण्डः ॥

# अथ षष्ठः सामान्यकाण्डः ।

स्याल्लोको विष्टपं विश्वं भुवनं जगती जगत् ।
जीवाजीवाधारक्षेत्रं लोकोऽलोकस्ततोऽन्यथा ॥ १ ॥
क्षेत्रज्ञ आत्मा पुरुषश्चेतनः स पुनर्भवी ।
जीवः स्यादसुमान् सत्त्व देहभृज्जन्युजन्तवः ॥ २ ॥
उत्पत्तिर्जन्मजनुषी जननं जनिरुद्भवः ।
जीवेऽसुजीवितप्राणा जीवातुर्जीवनौषधम् ॥ ३ ॥
श्वासस्तु श्वसित सोऽन्तर्मुख उच्छ्वास आहरः ।
आनो बहिर्मुखस्तु स्यान्निःश्वासः पान एतनः ॥ ४ ॥
आयुर्जीवितकालोऽन्तःकरण मानसं मनः ।

---

लोक , विष्टपम् (पु० न० ), "पिष्टपम्" विश्वम्, भुवनम् (पु० न०), जगती, जगत् (न०), षट् भूलोकस्य ॥ जीवा एकेन्द्रियादय , अजीवा धर्मास्तिकायादय , तेषामाधारभूत क्षेत्र लोक उच्यते । तत जीवाजीवाधारक्षेत्रादन्य आकाशस्वरूप अलोक उच्यते। इति लोकालोकयोर्लक्षणमभिहितम् ॥१॥ क्षेत्रज्ञ , आत्मा, पुरि शरीरे शेते–पुरुष , चेतन , चत्वारि आत्मन [ जीव ] ॥ भवी, जीव , असुमान् , सत्त्वम् ( पु० न० ), देहभृत्, जन्यु, ( पु० ), जन्तु ( पु० न० ), सप्त प्राणिन [ चेतन , जन्मी ] ॥ २ ॥ उत्पत्ति , जन्म, जनु ( न० ), जननम् , जनि (स्त्री०), उद्भव , षट् जन्मन ॥ जीव (त्रि०), असव ( नि० ब० पु० ), जीवितम्, "जीवातु" प्राणा ( नि० ब० पु० ), चत्वारि प्राणानाम् ॥ जीवितस्य रक्षणस्य औषधम् उपाय जीवातु ( पु० न० ), इति एक रक्षणोपायस्य ॥ ३ ॥ श्वास , श्वसितम्, द्वे श्वासस्य ॥ स अन्तर्मुख उच्छ्वास , आहर , आन , त्रीणि अन्तर्मुखश्वासस्य ॥ नि श्वास , पान , एतन , त्रीणि बहिर्मुखश्वासस्य ॥४॥ आयु ( न० ), उकारान्त पुस्यपि, जीवितकाल,

हृचेतो हृदयं चित्तं स्वान्तं गूढपथोचले ॥ ५ ॥
मनसः कर्म सङ्कल्पः स्यादथो शर्म निर्वृतिः ।
सातं सौख्यं सुखं दुःख त्वसुखं वेदना व्यथा ॥ ६ ॥
पीडा बाधाऽर्तिराभीलं कृच्छ्रं कष्टं प्रसूतिजम् ।
आमनस्यं प्रगाढं च स्यादाधिर्मानसी व्यथा ॥ ७ ॥
सपत्राकृतिनिष्पत्राकृती त्वत्यन्तपीडने ।
क्षुज्जाठराग्निजा पीडा व्यापादो द्रोहचिन्तनम् ॥ ८ ॥
उपज्ञा ज्ञानमाद्यं स्याच्चर्चा संख्या विचारणा ।
वासना भावना संस्कारोऽनुभूतात्यविस्मृतिः ॥ ९ ॥

---

द्वे आयुष ॥ अन्त करणम्, मानसम्, मन, हृद्, चेत, हृदयम्, चित्तम्, स्वान्तम्, गूढपथम्, उच्चलम्, (सर्वे न० ) दश अन्त - करणस्य [ अनिन्द्रियम् ] ॥ ५ ॥ मनस कर्म व्यापार सकल्प[1], [ विकल्प ] इत्येकम् ॥ शर्म, "शर्मम्" निर्वृति, सातम्, सौख्यम्, सुखम्, पञ्च सुखस्य ॥ दु खम्, असुखम्, वेदना, व्यथा, ॥ ६ ॥ पीडा, बाधा, "बाध" आर्त्ति, "आर्त्ति" आभीलम्, कृच्छ्रम्, कष्टम्, प्रसूतिजम, आमनस्यम्, प्रगाढम्, इति त्रयोदश दु खस्य ॥ मानसी व्यथा मनस पीडा आधि (पु० ), इत्येकम् ॥ ७ ॥ सपत्राकृति, निष्पत्राकृति, द्वे अत्यन्तपीडाया ॥ जठरानलस्य पीडा क्षुत् क्षुधौ (स्त्री० ), "क्षुधा" एक क्षुधाया ॥ व्यापाद, द्रोहचिन्तनम्, द्वे द्रोहचिन्तनस्य ॥ ८ ॥ आद्य प्रथम ज्ञान उपज्ञा, यथा—पाणिने उपज्ञा पाणिन्युपज्ञ व्याकरणम् पाणि निना प्रथम ज्ञातमित्यर्थ एकम् आद्यज्ञानस्य ॥ चर्चा, सख्या, विचारणा, त्रीणि विचारणाया । प्रमाणै अथपरीक्षणस्येत्यन्ये ॥ वासना, भावना, सस्कार, त्रीणि अनुभूतदृष्टश्रुतादिवस्तुन

---

1 उपचारात् सामान्येऽपि ।

निर्णयो निश्चयोऽन्तः संप्रधारणा समर्थनम् ।
अविद्याऽहंमत्यज्ञाने भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥१०॥
संदेहद्वापरारेका विचिकित्सा च संशयः ।
परभागो गुणोत्कर्षो दोषे त्वादीनवाश्रवौ ॥११॥
स्वाद् रूपं लक्षण भावश्चात्मप्रकृतिरीतय ।
सहजो रूपतत्वं च धर्मः सर्गो निसर्गवत् ॥१२॥
शीलं सतत्त्व संसिद्धिरवस्था तु दशा स्थितिः ।
स्नेहः प्रीतिः प्रेमहार्दे दाक्षिण्यं त्वनुकूलता ॥१३॥
विप्रतीसारोऽनुशयः पश्चात्तापोऽनुतापश्च ।

---

अविस्मरणस्य ॥ ९ ॥ निर्णय , निश्चय , अमति गच्छति सशयाभावम्—अन्त , त्रीणि निर्णयस्य ॥ सप्रधारणा, समर्थनम्, द्वे युक्तायुक्तपरीक्षाया ॥ अविद्या, अहमति , अज्ञानम्, त्रीणि अज्ञानस्य ॥ भ्रान्ति , मिथ्यामति , भ्रम , रज्जौ सर्पोयम् इति ज्ञान भ्रम त्रीणि भ्रमस्य ॥ १० ॥ सदेह , द्वौ पक्षौ परौ यस्मिन् द्वापरम् ( पु० न० ), आरेक , विचिकित्सा, सशय , रज्जुर्वा सर्पो वा इत्युभयकोटिपरामर्शि ज्ञान सशय पञ्च सशयस्य ॥ परभाग , गुणोत्कर्ष , द्वे गुणोत्कर्षस्य ॥ दोष , आदीयन्ते क्षीयन्ते गुणा अस्मिन्—आदीनव , आश्रव , त्रीणि दोषस्य ॥ ११ ॥ स्वशब्दात् परे रूप—लक्षण—भावशब्दा यथा—स्वरूपम् , स्वलक्षणम् , स्वभाव , आत्मा, प्रकृति , रीति , सहज , रूपस्य वस्तुन तत्त्वम्—रूपतत्त्वम् , धर्म (पु० न०), सर्ग ,निसर्ग , ॥१२॥ शीलम् (पु० न०),सह सद्भावेन वर्तते—सतत्त्वम् , ससिद्धि , चतुर्दश स्वभावस्य ॥ अवस्था, दशा, स्थिति , त्रीणि अवस्थाया ॥ स्नेह (पु० न०), प्रीति , प्रेम (पु० न०), हार्दम् , चत्वारि प्रीते ॥ दाक्षिण्यम् , अनुकूलता, द्वे आनुकूल्यस्य ॥ १३ ॥ विप्रतिसार , “विप्रतीसार” अनुशय , पश्चात्ताप , अनुताप , चत्वारि पश्चा-

अवधानसमाधानप्रणिधानानि तु समाधौ स्युः ॥१४॥
धर्मः पुण्यं वृषः श्रेयः सुकृते नियतौ विधिः ।
दैवं भाग्यं भागधेयं दिष्टं चायस्तु तच्छुभम् ॥१५॥
अलक्ष्मीर्निर्ऋति कालकर्णिका स्यादथाशुभम् ।
दुष्कृतं दुरितं पापमेनः पाप्मा च पातकम् ॥१६॥
किल्बिषं कलुषं किण्वं कल्मषं वृजिनं तमः ।
अहः कल्कमघं पङ्कं उपाधिर्धर्मचिन्तनम् ॥१७॥
त्रिवर्गो धर्मकामार्थाश्चतुर्वर्गः समोक्षकाः ।
बलतुर्याश्चतुर्भद्रं प्रमादोऽनवधानता ॥१८॥

---

पापस्य "पत्तावो' इ० भा० ॥ अवधानम, समाधानम्, प्रणिधानम्, समाधि (पु०), चत्वारि समाधानस्य ॥ १४ ॥ धर्म (पु० न० ), पुण्यम्, कामान् वर्षति इति वृष, श्रेय (न०), सुकृतम्, पञ्च पुण्यस्य ॥ नियति (स्त्री०), विधि (पु०), दैवम् (पु० न०), भाग्यम्, भागधेयम्, दिष्टम्, पञ्च दैवस्य ॥ तद् दैवम् शुभ चेत् अय (पु०), इत्येकम् शुभदैवस्य ॥ १५ ॥ अलक्ष्मी (स्त्री०), निर्ऋति (स्त्री०), कालकर्णिका, त्रीणि अशुभदैवस्य ॥ अशुभम्, दुष्कृतम्, दुरितम्, पापम्, एन (न०), पातकम् (पु० न०), ॥ १६ ॥ किल्बिषम्, किण्वम्, कल्मषम्, वृजिनम्, तम (न०), अह (न०), कल्कम् (पु० न०), अघम्, पङ्क (पु० न०), सप्तदश पापस्य ॥ उपाधि (पु०), धर्मचिन्तनम्, द्वे धर्मचिन्तनस्य ॥ १७ ॥ समुदिताना त्रयाणा धर्मार्थकामाना नाम त्रिवर्ग, इति एकम् ॥ समुदिताना चतुर्णा धर्मार्थकाममोक्षाणा नाम चतुर्वर्ग, इत्येकम् ॥ बल तुर्य चतुर्थं येषा ते बलतुर्या धर्मकामार्था, समुदिताना चतुर्णा धर्मकामार्थबलाना नाम चतुर्भद्रम्, इति एकम् ॥ प्रमाद,

निर्णयो निश्चयोऽन्तः संप्रधारणा समर्थनम् ।
अविद्याऽहंमत्यज्ञाने भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥१०॥
सदेहद्वापरारेका विचिकित्सा च संशयः ।
परभागो गुणोत्कर्षो दोषे त्वादीनवाश्रवौ ॥११॥
स्वाद् रूपं लक्षणं भावश्चात्मप्रकृतिरीतय ।
सहजो रूपतत्वं च धर्मः सर्गो निसर्गवत् ॥१२॥
शीलं सतत्त्व संसिद्धिरवस्था तु दशा स्थितिः ।
स्नेहः प्रीतिः प्रेमहार्दे दाक्षिण्य त्वनुकूलता ॥१३॥
विप्रतीसारोऽनुशय पश्चात्तापोऽनुतापश्च ।

---

अविस्मरणस्य ॥ ९ ॥ निर्णय , निश्चय , अमति गच्छति सशयाभावम्—अन्त , त्रीणि निर्णयस्य ॥ सप्रधारणा, समर्थनम्, द्वे युक्तायुक्तपरीक्षाया ॥ अविद्या, अहमति , अज्ञानम्, त्रीणि अज्ञानस्य ॥ भ्रान्ति , मिथ्यामति , भ्रम , रज्जौ सर्पोयम् इति ज्ञान भ्रम त्रीणि भ्रमस्य ॥ १० ॥ सदेह , द्वौ पक्षौ परौ यस्मिन् द्वापरम् ( पु० न० ), आरेक , विचिकित्सा, सशय , रज्जुर्वा सर्पो वा इत्युभयकोटिपरामर्शि ज्ञान सशय पञ्च सशयस्य ॥ परभाग , गुणोत्कर्प , द्वे गुणोत्कर्पस्य ॥ दोप , आदीयन्ते क्षीयन्ते गुणा अस्मिन्—आदीनव , आश्रव , त्रीणि दोपस्य ॥ ११ ॥ स्वशब्दात् परे रूप—लक्षण—भावशब्दा यथा—स्वरूपम् , स्वलक्षणम् , स्वभाव , आत्मा, प्रकृति , रीति , सहज , रूपस्य वस्तुन तत्त्वम्—रूपतत्त्वम् , धर्म (पु० न०), सर्ग ,निसर्ग , ॥१२॥ शीलम् (पु० न०),सह तद्भावेन वर्तते—सतत्त्वम् , ससिद्धि , चतुर्दश स्वभावस्य ॥ अवस्था, दशा, स्थिति , त्रीणि अवस्थाया ॥ स्नेह (पु० न०), प्रीति , प्रेम (पु० न०), हार्दम् , चत्वारि प्रीते ॥ दाक्षिण्यम् , अनुकूलता, द्वे आनुकूल्यस्य ॥ १३ ॥ विप्रतिसार , "विप्रतीसार " अनुशय , पश्चात्ताप , अनुताप , चत्वारि पश्चा-

दृढः कठोरः कठिनो जरठः कोमलः पुनः ।
मृदुलो मृदुसोमालसुकुमारा अकर्कशः ॥२३॥
मधुरस्तु रसज्येष्ठो गुल्यः स्वादुर्मधूलकः ।
अम्लस्तु पाचनो दन्तशठोऽथ लवणः सरः ॥ २४ ॥
सर्वरसोऽथ कटु. स्यादोपणो मुखशोधनः ।
वक्त्रभेदी तु तिक्तोऽथ कषायस्तुवरो रसाः ॥ २५ ॥
गन्धो जनमनोहारी सुरभिर्घ्राणतर्पणः ।
समाकर्षी निर्हारी च स आमोदो विदूरगः ॥ २६ ॥
विमर्दोत्थः परिमलोऽथामोदी मुखवासनः ।

॥२२॥ दृढ , कठोर , कठिन , जरठ , "जरट" सर्वे वाच्यलिङ्गा दश कण्ठस्य ॥ कोमल , मृदुल , मृदु , सोमाल , सुकुमार , अकर्केश , सर्वे वाच्यलिङ्गा पट् कोमलस्य ॥ २३ ॥ मधुर , रसज्येष्ठ , गुल्य , स्वादु , मधूल , एते रसमात्रे पुंसि स्यु रसवति वस्तुनि वाच्यलिङ्गा पञ्च मधुरस्य ॥ अम्ल , पाचन , दन्तशठ , इमे रसमात्रे पुंसि स्यु रसवति वाच्यलिङ्गा त्रीणि अम्लस्य "खाटो" इ० भा० ॥ लवण , सर , ॥ २४ ॥ सर्वरस , रसमात्रे पुंसि स्यु तद्वति वाच्यलिङ्गा त्रीणि लवणस्य "खारो" इ० भा० ॥ कटु , ओपण , मुखशोधन , रसमात्रे पुंसि स्यु । तद्वति वाच्यलिङ्गा त्रीणि कटो "तीखो" इ० भा० ॥ वक्त्रभेदी, तिक्त , रसमात्रे पुंसि तद्वति वाच्यलिङ्गा द्वे तिक्तस्य "कडवो" इ० भा० ॥ कषाय , तुवर , "तूवर , कुवर " एतौ पुंक्लीबलिङ्गौ तद्वति वाच्यलिङ्गौ द्वे तुवरस्य "तुरो" इ० भा० ॥ इति मधुरादय षड्रसा उक्ता ॥ रस (पु० न० ), एकम् रसस्य ॥ २५ ॥ गन्ध , जनमनोहारी, सुरभि , घ्राणतर्पण , समाकर्षी, निर्हारी, षट् सामान्यतो गन्धस्य ॥ स सुरभि विदूरग अतिदूरव्यापी चेत् आमोद , इत्येकम् ॥ २६ ॥ विमर्दन सघर्षणादिना उत्थ उत्पन्न गन्ध परिमल , इत्येकम् ॥ अत पर

छन्दोऽभिप्राय आकूतं मतभावाशया अपि ।
हृषीकमक्षं करणं स्रोतः खं विषयीन्द्रियम् ॥१९॥
बुद्धीन्द्रियं स्पर्शनादि पाण्यादि तु क्रियेन्द्रियम् ।
स्पर्शादयस्त्विन्द्रियार्था विषया गोचरा अपि ॥२०॥
शीते तुषारः शिशिरः सुशीमः शीतलो जडः ।
हिमोऽथोष्णे तिग्मस्तीव्रस्तीक्ष्णश्चण्डः खरः पटुः॥२१॥
कोष्णः कवोष्णः कदुष्णो मन्दोष्णश्चेषदुष्णवत् ।
निष्ठुरः कक्खटः क्रूरः परुषः कर्कशः खरः ॥२२॥

अनवधानता, द्वे प्रमादस्य ॥ १८ ॥ छन्द अकारान्तोयम्, अभिप्राय, आकूतम्, मतम्, भाव (पु० न०), आशय, षट् अभिप्रायस्य ॥ हृषीकम्, अक्षम्, करणम्, स्रोत (न०), खम्, विषयि, इन्द्रियम्, सप्त इन्द्रियस्य ॥ १९ ॥ स्पर्शनादि बुद्धीन्द्रिय ज्ञानेन्द्रिय उच्यते ॥ पाण्यादि क्रियेन्द्रिय कर्मेन्द्रिय उच्यते ॥ स्पर्श–रस–गन्ध–रूप–शब्दा इमे पञ्च इन्द्रियार्था, विषया, गोचरा, त्रीणि विषयाणाम् ॥ २० ॥ शीत, तुषार, शिशिर, सुशीम, "सुषीम, सुषिम" शीतल, जड, हिम, एते सप्त गुणे पुंसि तद्वति वाच्यलिङ्गा । यथा–शीतो वायु, शीता यवागू, शीत जलम्, इत्यादि सप्त शीतस्य ॥ उष्ण, तिग्म, तीव्र, तीक्ष्ण, चण्ड, खर, पटु, एते सप्त गुणे पुंसि तद्वति वाच्यलिङ्गा । गुणे क्लीबलिङ्गा तद्वति वाच्यलिङ्गा इत्यन्ये । सप्त उष्णस्य ॥२१॥ ईषदुष्ण कोष्ण, ईषदुष्ण कवोष्ण, कदुष्ण, मन्दोष्ण, ईषदुष्ण, एते गुणे पुंसि तद्वति वाच्यलिङ्गा । गुणे क्लीबलिङ्गा तद्वति वाच्यलिङ्गा इत्यन्ये । पञ्च ईषदुष्णस्य ॥ निष्ठुर, कक्खट, "खक्खट" क्रूर, परुष, कर्कश, खर,

१ मन कर्णस्तथा नेत्रं रसना च त्वचा सह । नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते" ॥१॥ २ पायूपस्थं पाणिपादौ वाक् चेतीन्द्रियसंग्रहः । उत्सर्गानन्दादानगत्यालापाश्च तत्क्रिया" ॥ १ ॥

दृढः कठोरः कठिनो जरठः कोमलः पुनः ।
मृदुलो मृदुसोमालसुकुमारा अकर्कशः ॥२३॥
मधुरस्तु रसज्येष्ठो गुल्यः स्वादुर्मधूलकः ।
अम्लस्तु पाचनो दन्तशठोऽथ लवणः सरः ॥ २४ ॥
सर्वरसोऽथ कटु॰ स्यादोपणो मुखशोधन॰ ।
वक्त्रभेदी तु तिक्तोऽथ कषायस्तुवरो रसाः ॥ २५ ॥
गन्धो जनमनोहारी सुरभिर्घ्राणतर्पणः ।
समाकर्षी निर्हारी च स आमोदो विदूरगः ॥ २६ ॥
विमर्दोत्थः परिमलोऽथामोदी मुखवासनः ।

॥२२॥ दृढ , कठोर , कठिन , जरठ , "जरट" सर्वे वाच्यलिङ्गा दृश कण्ठस्य ॥ कोमल , मृदुल , मृदु , सोमाल , सुकुमार , अकर्कश , सर्वे वाच्यलिङ्गा षट् कोमलस्य ॥ २३ ॥ मधुर., रसज्येष्ठ , गुल्य , स्वादु , मधूल , एते रसमात्रे पुंसि स्यु रसवति वस्तुनि वाच्यलिङ्गा पञ्च मधुरस्य ॥ अम्ल , पाचन , दन्तशठ , इमे रसमात्रे पुंसि स्यु रसवति वाच्यलिङ्गा त्रीणि अम्लस्य "खाटो" इ० भा० ॥ लवण , सर , ॥ २४ ॥ सर्वरस , रसमात्रे पुंसि स्यु तद्वति वाच्यलिङ्गा त्रीणि लवणस्य "खारो" इ० भा० ॥ कटु , ओपण , मुखशोधन , रसमात्रे पुंसि स्यु' । तद्वति वाच्यलिङ्गा त्रीणि कटो "तीखो" इ० भा० ॥ वक्त्रभेदी, तिक्त , रसमात्रे पुंसि तद्वति वाच्यलिङ्गा द्वे तिक्तस्य "कडवो" इ० भा० ॥ कषाय , तुवर , "तूवर , कुवर" एतौ पुल्लीयलिङ्गौ तद्वति वाच्यलिङ्गौ द्वे तुवरस्य "तुरो" इ० भा० ॥ इति मधुरादय षड्रसा उक्ता ॥ रस (पु० न० ), एकम् रसस्य ॥ २५ ॥ गन्ध , जनमनोहारी, सुरभि , घ्राणतर्पण , समाकर्षी, निर्हारी, षट् सामान्यतो गन्धस्य ॥ स सुरभि विदूरग अतिदूरव्यापी चेत् आमोद , इत्येकम् ॥ २६ ॥ विमर्दन सघर्षणादिना उत्थ उत्पन्न गन्ध परिमल , इत्येकम् ॥ अत पर

**इष्टगन्धः सुगन्धिश्च दुर्गन्धः पूतिगन्धिकः ॥ २७ ॥**
**आमगन्धि तु विस्रं स्याद्वर्णाः श्वेतादिका अमी ।**
**श्वेतः श्येतः सितः शुक्लो हरिणो विशदः शुचिः २८**
**अवदातगौरशुभ्रवलक्षधवलार्जुनाः ।**
**पाण्डुरः पाण्डरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ २९ ॥**
**कापोतस्तु कपोताभः पीतस्तु सितरञ्जनः ।**
**हारिद्रः पीतलो गौरः पीतनीलः पुनर्हरित् ॥ ३० ॥**
**पालाशो हरितस्तालकाभो रक्तस्तु रोहितः ।**

---

वित्तलशब्दपर्यन्त वाच्यलिङ्गा विशेष्यानुसारेण त्रिलिङ्गा इत्यर्थ ॥ आमोदी, मुखवासन , इष्टगन्ध , सुगन्धि , चत्वारि इष्टगन्धस्य । उक्त च "कस्तूरिकायामामोद कर्पूरे मुखवासन ॥ बकुले स्यात्परिमलश्चम्पके सुरभिस्तथा" इति विशेषोऽपि दृश्यते ॥ दुर्गन्ध , पूति दुष्ट गन्धो यस्य स —पूतिगन्धि , द्वे दुर्गन्धस्य ॥२७॥ आम अपक्व मल तस्येव गन्धो यस्य तत्—आमगन्धि, विस्रम् , द्वे अपक्वमांसादिगन्धस्य ॥ अमी वक्ष्यमाणा श्वेतादिका वर्णा , उच्यन्ते ॥ श्वेत , श्येत , सित , शुक्ल , हरिण , विशद , शुचि ॥ २८ ॥ अवदात , गौर , शुभ्र , वलक्ष , "अवलक्ष ," धवल , अर्जुन , पाण्डुर , पाण्डर , पाण्डु , षोडश श्वेतवर्णस्य "श्वेतस्तु समपीतोऽसौ रक्तेतरजपारुचि । वलक्षस्तु सित शाव , कदलीकुसुमोपम ॥ १ ॥ अर्जुनस्तु सित कृष्णलेशवान् कुमुदच्छवि । पाण्डुरस्तु पीतभागार्ध केतकीधूलसंनिभ " इत्युक्तमन्यत्र ॥ २ ॥ ईषत्पाण्डु , धूसर , द्वे ईषद्धवलस्य "धूसरस्तु सित , पीतलेशवान् वकुलच्छवि " इत्यन्यत्र ॥ २९ ॥ कापोत , कपोताभ , द्वे कपोतवर्णस्य ॥ पीत , सितरञ्जन , हारिद्र , पीतल , गौर , पञ्च पीतस्य ॥ पीतनील , हरित् ॥ ३० ॥ पालाश , "पलाश " हरित ,

---

१ तकारान्त हरितो हरित ।

**माञ्जिष्ठो लोहित' शोण' श्वेतरक्तस्तु पाटलः ॥ ३१ ॥**
**अरुणो बालसन्ध्याभः पीतरक्तस्तु पिञ्जरः ।**
**कपिलः पिङ्गल' श्यावः पिशङ्गः कपिशो हरिः ॥३२॥**
**बभ्रुः कद्रुः कडारश्च पिङ्गे कृष्णस्तु मेचकः ।**
**स्याद्रामः श्यामल. श्यामः कालो नीलोऽसितः शिति'**
**रक्तश्यामे पुनर्धूम्रधूमलावथ कर्बुरः ।**
**किर्मीर एतः शबलश्चित्रकल्माषचित्तलाः ॥ ३४ ॥**
**शब्दो निनादो निर्घोषः स्वानो ध्वानः स्वरो ध्वनिः ।**
**निर्ह्रादो निनदो ह्रादो नि.स्वानो निःस्वनः स्वनः ३५**
**रवो नादः स्वनिर्घोष' सव्याङ्भ्यो राव आरवः ।**
**क्वणनं निक्वणः क्वाणो निक्वाणश्च क्वणो रणः ॥ ३६ ॥**

---

तालक हरितालक तस्येव आभा यस्य स —तालकाभ , पञ्च हरिद्वर्णस्य ॥ रक्त , रोहित , माञ्जिष्ठ , लोहित , शोण , पञ्च रक्तवर्णस्य ॥ श्वेतरक्त , पाटल , द्वे श्वेतरक्तस्य ॥ ३१॥ अरुण , बालसध्याभ , द्वे अरुणवर्णस्य ॥ पीतरक्त , पिञ्जर , कपिल , पिङ्गल , श्याव , पिशङ्ग , कपिश , हरि , ॥ ३२ ॥ बभ्रु , कद्रु , कडार , पिङ्ग , द्वादश कपिलवर्णस्य ॥ कृष्ण , मेचक , राम , श्यामल , श्याम , काल , नील , असित , शिति , नव कृष्णवर्णस्य ॥ ३३ ॥ रक्तश्याम , धूम्र , धूमल , त्रीणि धूम्रवर्णस्य ॥ कर्बुर , किर्मीर , एत , शबल , चित्र , कल्माष , चित्तल , सप्त कर्बुरवर्णस्य ॥ ३४ ॥ शब्द , निनाद , निर्घोष , स्वान , ध्वान , स्वर , ध्वनि , निर्ह्राद , निनद , ह्राद , नि स्वान , नि स्वन , स्वन ॥ ३५ ॥ रव , "राव" नाद , स्वनि , घोष , सम् वि-आङ्भ्य उपसर्गेभ्य परो राव यथा—सराव , विराव , आराव , आरव , क्वणनम् , निक्वण , क्वाण , निक्वाण , क्वण , रण , सप्तविंशति शब्दमात्रस्य । तत्र क्वणनाद्य

**इष्टगन्धः सुगन्धिश्च दुर्गन्धः पूतिगन्धिकः ॥ २७ ॥**
**आमगन्धि तु विस्रं स्याद्वर्णाः श्वेतादिका अमी ।**
**श्वेतः श्येतः सितः शुक्लो हरिणो विशदः शुचिः २८**
**अवदातगौरशुभ्रवलक्षधवलार्जुनाः ।**
**पाण्डुरः पाण्डरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ २९ ॥**
**कापोतस्तु कपोताभः पीतस्तु सितरञ्जनः ।**
**हारिद्रः पीतलो गौरः पीतनीलः पुनर्हरित् ॥ ३० ॥**
**पालाशो हरितस्तालकाभो रक्तस्तु रोहितः ।**

---

चित्तलशब्दपर्यन्त वाच्यलिङ्गा विशेष्यानुसारेण त्रिलिङ्गा इत्यर्थ ॥ आमोदी, मुखवासन , इष्टगन्ध , सुगन्धि , चत्वारि इष्टगन्धस्य । उक्त च "कस्तूरिकायामामोद कर्पूरे मुखवासन ॥ वकुले स्यात्परि मलश्चम्पके सुरभिस्तथा" इति विशेषोऽपि दृश्यते ॥ दुर्गन्ध , पूति दुष्ट गन्धो यस्य स —पूतिगन्धि , द्वे दुर्गन्धस्य ॥२७॥ आम अपक्व मल तस्येव गन्धो यस्य तत्–आमगन्धि, विस्रम् , द्वे अपक्वमासादि-गन्धस्य ॥ अमी वक्ष्यमाणा श्वेतादिका वर्णा , उच्यन्ते ॥ श्वेत , श्येत , सित , शुक्ल , हरिण , विशद , शुचि ॥ २८ ॥ अवदात , गौर , शुभ्र , वलक्ष , "अवलक्ष ," धवल , अर्जुन , पाण्डुर , पाण्डर , पाण्डु , षोडश श्वेतवर्णस्य "श्वेतस्तु समपीतोऽसौ रक्तेतरजपारुचि । वलक्षस्तु सित शाय , कदलीकुसुमोपम ॥ १ ॥ अर्जुनस्तु सित कृष्णलेशवान् कुमुदच्छवि । पाण्डुरस्तु पीतभागार्धः केतकीधूलसनिभ " इत्युक्तमन्यत्र ॥ २ ॥ ईषत्पाण्डु, धूसर , द्वे ईषद्धवलस्य "धूसरस्तु सित , पीतलेशवान् वकुलच्छवि " इत्यन्यत्र ॥ २९ ॥ कापोत , कपोताभ , द्वे कपोतवर्णस्य ॥ पीत , सितरञ्जन , हारिद्र , पीतल , गौर , पञ्च पीतस्य ॥ पीतनील , हरित्[1] ॥ ३० ॥ पालाश , "पलाश " हरित ,

---

[1] तकारान्त हरितौ हरित ।

ह्रेषा ह्रेषा तुरगाणां गर्जनं गजबृंहिते ॥ ४१ ॥
विस्फारो धनुषां ह्म्भारम्भे गोर्जलदस्य तु ।
स्तनितं गर्जितं गर्जिः स्वनितं रसितादि च ॥ ४२ ॥
कूजितं स्याद्विहङ्गानां तिरश्चां रुतवाशिते ।
वृकस्य रेषणं रेषा बुक्कनं भषणं शुनः ॥ ४३ ॥
पीडितानां तु क्वणितं मणितं रतकूजितम् ।
प्रक्वाणः प्रक्वणस्तन्त्र्या मर्दलस्य तु गुन्दलः ॥ ४४ ॥
क्ष्वीजनं तु कीचकानां भेर्यां नादस्तु दद्दरः ।
तारोऽत्युच्चैर्ध्वनिर्मन्द्रो गम्भीरो मधुरः कलः ॥ ४५ ॥
काकली तु कलः सूक्ष्म एकतालो लयानुगः ।

---

दिशब्दस्य ॥ शिञ्जितम्, एकं भूषणध्वनेः ॥ ह्रेषा, ह्रेषा, द्वे अश्वशब्दस्य ॥ गर्जनम्, "गर्जो" एकं गजशब्दस्य ॥ ४१ ॥ विस्फारः, इत्येकं धनुर्ध्वनेः ॥ ह्म्भा, रम्भा, द्वे गोशब्दस्य ॥ स्तनितम्, गर्जितम्, गर्जिः (स्त्री०), स्वनितम्, रसितम्, आदिशब्दात् ध्वनितादयः, पञ्च मेघध्वनेः ॥ ४२ ॥ कूजितम्, एकं पक्षिणां शब्दस्य ॥ रुतम्, वाशितम्, द्वे मृगपक्षिणां शब्दस्य ॥ रेषणम्, रेषा, द्वे वृकशब्दस्य ॥ बुक्कनम्, भषणम्, द्वे श्वरवस्य "भसवु" इ० भा० ॥ ४३ ॥ क्वणितम्, इत्येकं व्याधिप्रहारादिभिः पीडितानां शब्दस्य ॥ मणितम्, "भणितम्, रतकूजितम्", द्वे रतिसमये अव्यक्तशब्दस्य ॥ प्रक्वाणः, प्रक्वणः, द्वे वीणाया ध्वनेः ॥ गुन्दलः, एकं मर्दलध्वनेः ॥ ४४ ॥ क्ष्वीजनम्, इति एकं कीचकध्वनेः ॥ दद्दरः, इत्येकं भेरीध्वनेः ॥ तारः (त्रि०), इत्येकम् अत्युच्चध्वनेः ॥ मन्द्रः, इत्येकम् गम्भीरशब्दस्य ॥ यः मधुरः ध्वनिः सः कलः, इत्येकम् ॥ ४५ ॥ यः सूक्ष्मः कलः सा काकली, "काकलि" इत्येकम् सूक्ष्ममधुरनादस्य ॥ एकः समः तालो मानं यस्य सः — एकतालः, लयानुगः, द्वे अभिन्नकालमानस्य गानवादित्रलयसाम्यस्य ॥ काकुः (पु० स्त्री०), ध्वनिविकारः, द्वे शोकभीतिका-

षड्जर्षभगान्धारा मध्यमः पञ्चमस्तथा ।
धैवतो निषधः सप्त तन्त्रीकण्ठोद्भवाः स्वराः ॥ ३७ ॥
ते मन्द्रमध्यताराः स्युरुरःकण्ठशिरोभवाः ।
रुदितं क्रन्दितं क्रुष्टं तदपुष्टं तु गह्वरम् ॥ ३८ ॥
शब्दो गुणानुरागोत्थः प्रणादः सीत्कृतं नृणाम् ।
पर्दनं गुदजे शब्दे कर्दनं कुक्षिसम्भवे ॥ ३९ ॥
क्ष्वेडा तु सिंहनादोऽथ क्रन्दनं सुभटध्वनिः ।
कोलाहलः कलकलस्तुमुलो व्याकुलो रवः ॥ ४० ॥
मर्मरो वस्त्रपत्रादेर्भूषणानां तु शिञ्जितम् ।

---

पञ्च वीणाशब्दस्य इति अवगन्तव्यम् ॥३६॥ षड्ज, "नासा कण्ठमुरस्तालु जिह्वा दन्ताश्च संस्पृशन् । षड्भ्य सञ्जायते यस्मात्तस्मात् षड्ज इति स्मृत" ऋषभ, गान्धार, मध्यम, पञ्चम, धैवत, निषध, "षड्ज रौति मयूरस्तु गावो नर्दन्ति चर्षभम् । अजाविकौ तु गान्धार क्रौञ्चो नर्दति मध्यमम् ॥ १ ॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वस्तु धैवत रौति निषाद रौति कुञ्जर" ॥ २ ॥ इति सप्ताना वीणोत्थिताना कण्ठोत्थिताना च स्वराणामेकैकम् ॥ ३७ ॥ ते षड्जादय स्वरा प्रत्येकमुर कण्ठ शिर इति स्थानभेदेन मन्द्रा मध्या ताराश्च उच्यन्ते ॥ रुदितम्, क्रन्दितम्, क्रुष्टम्, त्रीणि रोदनस्य ॥ तद् रुदितम् अपुष्टम् अनुच्चस्वर चेद् गह्वरम्, इति एकम् ॥ ३८ ॥ नृणा गुणानुरागाभ्यामुत्थित शब्द प्रणाद, सीत्कृतम्, द्वे सीत्कारस्य ॥ पर्दनम्, एकम् गुदशब्दस्य ॥ कर्दनम्, एक कुक्षिशब्दस्य ॥ ३९ ॥ क्ष्वेडा, सिंहनाद, द्वे योधाना सिंहनादस्य ॥ सुभट प्रति आगच्छ मया सह युध्यस्व इत्याक्रोशपूर्वकमाह्वानम् क्रन्दनम्, सुभटध्वनि, द्वे वीराणामाह्वानस्य ॥ कोलाहल (पु० न०), कलकल, द्वे बहुभि कृतस्य महाध्वने ॥ तुमुल, एक व्याकुलशब्दस्य ॥ ४० ॥ मर्मर, एक वस्त्रपर्णा-

ह्रेषा ह्रेषा तुरगाणा गर्जनं गजबृंहिते ॥ ४१ ॥
विस्फारो धनुषां हम्भारम्भे गोर्जलदस्य तु ।
स्तनितं गर्जित गर्जिः स्वनित रसितादि च ॥ ४२ ॥
कूजितं स्याद्विहङ्गानां तिरश्चां रुतवाशिते ।
वृकस्य रेषणं रेषा बुक्कन भषणं शुनः ॥ ४३ ॥
पीडितानां तु कणित मणित रतकूजितम् ।
प्रक्काणः प्रक्कणस्तन्त्र्या मर्दलस्य तु गुन्दलः ॥ ४४ ॥
क्षीजन तु कीचकाना भेर्या नादस्तु दद्दुरः ।
तारोऽत्युचैर्ध्वनिर्मन्द्रो गम्भीरो मधुरः कलः ॥ ४५ ॥
काकली तु कलः सूक्ष्म एकतालो लयानुगः ।

---

दिशब्दस्य ॥ शिञ्जितम्, एक भूषणध्वने ॥ हेषा, ह्रेषा, द्वे अश्वशब्दस्य ॥ गर्जनम्, "गर्जा" एक गजशब्दस्य ॥ ४१ ॥ विस्फार, इत्येक धनुर्ध्वने. ॥ हम्भा, रम्भा, द्वे गोशब्दस्य ॥ स्तनितम्, गर्जितम्, गर्जि (स्त्री०), स्वनितम्, रसितम्, आदिशब्दात् ध्वनितादय, पञ्च मेघध्वने ॥ ४२ ॥ कूजितम्, एक पक्षिणा शब्दस्य ॥ रुतम्, वाशितम्, द्वे मृगपक्षिणा शब्दस्य ॥ रेषणम्, रेषा, द्वे वृकशब्दस्य ॥ बुक्कनम्, भषणम्, द्वे श्वरवस्य "भसवु" इ० भा० ॥ ४३ ॥ कणितम्, इत्येक व्याधिप्रहारादिभि पीडिताना शब्दस्य ॥ मणितम्, "भणितम्, रतकूजितम्", द्वे रतिसमये अव्यक्तशब्दस्य ॥ प्रक्काण, प्रक्कण, द्वे वीणाया ध्वने ॥ गुन्दल, एक मर्दलध्वने ॥ ४४ ॥ क्षीजनम्, इति एक कीचकध्वने ॥ दद्दुर, इत्येक भेरीध्वने ॥ तार (त्रि०), इत्येकम् अत्युच्चध्वने ॥ मन्द्र, इत्येकम् गम्भीरशब्दस्य ॥ य मधुर ध्वनि स कल, इत्येकम् ॥ ४५ ॥ य सूक्ष्म कल सा काकली, "काकलि" इत्येकम् सूक्ष्ममधुरनादस्य ॥ एक सम तालो मान यस्य स — एकताल, लयानुग, द्वे अभिन्नकालमानस्य गानवादित्रलयसाम्यस्य ॥ काकु (पु० स्त्री०), ध्वनिविकार, द्वे शोकभीतिका-

